# SAMSKṚTA SAURABHAM.

BY

KESHAVA PRASAD MISRA

*Benares Hindu University.*

# संस्कृतसौरभम्

गन्धवाहः

केशवप्रसादमिश्रः

हिन्दूविश्वविद्यालयाध्यापकः



EDUCATIONAL PUBLISHING HOUSE

BENARES.

1934

*Price Twelve Annas.*

# FOREWORD.

Modern education claims that every subject should well justify itself before it can find a place in the curriculum of school studies. Sanskrit has honourably won a place there. But the practical problem before education is 'How to teach successfully ?' If we must teach Sanskrit in the schools for its great cultural values, we must bear in mind that we have to teach Sanskrit to the young students in the schools. The needs and capacities of these students demand the primary attention. A subject, then, is really justified if it can be made well-suited to its students, in other words, the logic of a subject must stand co-ordinated with the psychology of its students. The matter must appeal to their interests. It is from this standpoint that the inclusion of Sanskrit in school studies has at times been questioned by some educationists. The old methods of teaching Sanskrit do not fit in the new systems of teaching. The new methods are not yet well experimented and brought out. Sanskrit learning, thus, suffers a neglect in schools. And, evidently, the most serious cause of this neglect is to be found in the lack of suitable text-books. What the teacher, specially of a classical language like Sanskrit, needs is a suitable text-book in his hand. Sanskrit, so rich and so old, offers ample materials and most suitable ways to use them for best results. The task before a maker of text-books of Sanskrit is to study the old, select and arrange it to suit what is known as the new in teaching. It will mean only a revival

of the old into the new. Some pioneers in this field have proved this with considerable success.

The above are what the compiler of the present book thinks and realises. He feels the desideratum of text-books for Sanskrit teaching in schools, such as may afford the best in Sanskrit suited to those for whom they be meant and may fit in the systems of modern teaching. He has tried to supply the need for the students of the standards of VII and VIII classes in modern schools by compiling a book which may serve to enliven true interest in Sanskrit. The present is meant to meet the requirements of the students of the High School standards. In preparing this selection the compiler has kept in view the end to be achieved by the teaching of Sanskrit in High School classes. The student having passed this stage should have acquired enough knowledge and appreciation of the language and some of its forms in literature so as to make him practically qualified and enlivened for studying, by himself, certain works in ordinary Sanskrit. This is to serve as a good foundation, for higher cultivation of Sanskrit learning either at the University or at home.

Thus the main features of the present book are :—

The pieces are carefully chosen to suit the interests of the grown up boy or girl. They generally tell of some noble resolve or some heroic action. The idealism breathed in them is such as may easily be appreciated by the students at this stage. And every lesson has its peculiar vein promising to make lively effects on the reader. There is, thus, a rich variety of form and styles—descriptive, narrative, dramatic, epic and lyric, all arranged to greet the young

reader. The dramatic element, however, predominates in the selection. For it is the dialogues or the live depicting of actions that mostly appeal to the young mind. These are very valuable for the teacher as well, since he can here successfully adopt some of the modern methods of language teaching and create a true atmosphere of Sanskrit in the class.

The range of the selection embraces the vast field of Sanskrit literature. The great epics, dramas, romances and other important types of writing find their apt representation here. A look at the list of contents will justify the statement. The great writers from वाल्मीकि, व्यास, अश्वघोष, भास, कालिदास, शूद्रक, बाण, हर्ष, भवभूति to some of modern date like अम्बिकादत्त व्यास appear in their happy roles. This will enliven a true taste for literature and introduce the student to the great writers in Sanskrit. But to present the true सौरभ (fragrance) of their works to the young readers these have been carefully culled, modified or adapted. The main work of the compiler has been to re-arrange and grade the selected pieces into a fit text-book. He has endeavoured to effect this end. Any just suggestion to make further changes or adaptations will be quite thankfully welcome.

The ennobling virtues of Sanskrit have all through been maintained. The moral and cultural effects of the pieces are well-considered.

To facilitate right understanding and just appreciation of the pieces notes are added at the end of the selection. They serve to elucidate the important grammatical or literary points occuring in the text. But they do not substitute

the dictionary or the living guide in the form of the teacher. They are more suggestive than explanatory.

The book is, thus, designed to afford the genuine fragrance of Sanskrit to those who care to approach it. It is to his educational compeers and through them to the great community of students that the compiler presents his work with his best wishes and hopes.

In conclusion the compiler has great pleasure in recording his obligations to his literary companions Pandit Padmanarayàna Acharya M. A. and Pandit Chandrashekhara Pandeya Dharmacharya for their valuble assistance.

*The Compiler.*

# अनुक्रमणिका

---

श्रीः

# संस्कृतसौरभम्



## १—रामस्य ग्राह्या गुणाः

स च नित्यं प्रसन्नात्मा मृदुपूर्वं च भाषते ।
उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते ॥ १ ॥
कदाचिदुपकारेण कृतेनैकेन तुष्यति ।
न स्मरत्यपकाराणां शतमप्यात्मवत्तया ॥ २ ॥
शीलवृद्धैर्ज्ञानवृद्धैर्वयोवृद्धैश्च सज्जनैः ।
कथयन्नास्त वै नित्यमस्त्रयोग्यान्तरेष्वपि ॥ ३ ॥
बुद्धिमान्मधुराभाषी पूर्वभाषी प्रियंवदः ।
वीर्यवान्न च वीर्येण महता स्वेन विस्मितः ॥ ४ ॥
न चानृतकथो विद्वान् वृद्धानां प्रतिपूजकः ।
अनुरक्तः प्रजाभिश्च प्रजाश्चाप्यनुरज्यते ॥ ५ ॥
सानुक्रोशी जितक्रोधो ब्राह्मणप्रतिपूजकः ।
दीनानुकम्पी धर्मज्ञो नित्यं प्रग्रहवाञ्छुचिः ॥ ६ ॥
नाश्रेयसि रतो यश्च न विरुद्धकथारुचिः ।
उत्तरोत्तरयुक्तीनां वक्ता वाचस्पतिर्यथा ॥ ७ ॥

अरोगस्तरुणो वाग्मी वपुष्मान्देशकालवित् ।
लोके पुरुषसारज्ञः साधुरेको विनिर्मितः ॥ ८ ॥
स तु श्रेष्ठैर्गुणैर्युक्तः प्रजानां पार्थिवात्मजः ।
बहिश्चर इव प्राणो बभूव गुणतः प्रियः ॥ ९ ॥
सर्वविद्याव्रतस्नातो यथावत् सांगवेदवित् ।
इष्वस्त्रे च पितुः श्रेष्ठो बभूव भरताग्रजः ॥१०॥
कल्याणाभिजनः साधुरदीनः सत्यवागृजुः ।
वृद्धैरभिविनीतश्च द्विजैर्धर्मार्थदर्शिभिः ॥११॥
धर्मकामार्थतत्त्वज्ञः स्मृतिमान्प्रतिभानवान् ।
लौकिके समयाचारे कृतकल्पो विशारदः ॥१२॥
निभृतः संवृताकारो गुप्तमन्त्रः सहायवान् ।
अमोघक्रोधहर्षश्च त्यागसंयमकालवित् ॥१३॥
दृढभक्तिः स्थिरप्रज्ञो नासद्ग्राही न दुर्वचाः ।
निस्तन्द्रीरप्रमत्तश्च स्वदोषपरदोषवित् ॥१४॥
शास्त्रज्ञश्च कृतज्ञश्च पुरुषान्तरकोविदः ।
यः प्रग्रहानुग्रहयोर्यथान्यायं विचक्षणः ॥१५॥
सत्संग्रहानुग्रहणे स्थानविन्निग्रहस्य च ।
आयकर्मण्युपायज्ञः संदृष्टव्ययकर्मवित् ॥१६॥
श्रैष्ठ्यं चास्त्रसमूहेषु प्राप्तो व्यामिश्रकेषु च ।
अर्थधर्मौ च संगृह्य सुखतन्त्रो न चालसः ॥१७॥
वैहारिकाणां शिल्पानां विज्ञातार्थविभागवित् ।
आरोहे विनये चैव युक्तो वारणवाजिनाम् ॥१८॥
नावज्ञेयश्च भूतानां न च कालवशानुगः ।
एवं श्रेष्ठैर्गुणैर्युक्तः प्रजानां पार्थिवात्मजः ॥१९॥

संमतस्त्रिषु लोकेषु वसुधायाः क्षमागुणः ।
बुद्ध्या बृहस्पतेस्तुल्यो वीर्ये चापि शचीपतेः ॥२०॥
तथा सर्वप्रजाकान्तैः प्रीतिसंजननैः पितुः ।
गुणैर्विरुरुचे रामो दीप्तः सूर्य इवांशुभिः ॥२१॥

---

## २—ययातिचरितम्

यतिययातिसंयात्यायातिवियतिकृतिसंज्ञा नहुषस्य षट् पुत्रा महाबलपराक्रमा बभूवुः । यतिस्तु राज्यं नैच्छत् । ययातिस्तु भूभृदभवत् । उशनसश्च दुहितरं देवयानीं शर्मिष्ठाञ्च वार्षपर्वणीमुपयेमे । अत्रानुवंशश्लोको भवति—

यदुं च तुर्वसुञ्चैव देवयानी व्यजायत ।
द्रुह्युञ्चाणुञ्च पूरुञ्च शर्मिष्ठा वार्षपर्वणी ॥ १ ॥

काव्यशापाच्च अकालेनैव ययातिर्जरामवाप । प्रसन्नशुक्रवचनाच्च जरां संक्रामयितुं ज्येष्ठं पुत्रं यदुमुवाच । त्वन्मातामहशापादियमकालेनैव जरा मामुपस्थिता । तामहं तस्यैवानुग्रहात् भवतः सञ्चारयाम्येकं वर्षसहस्रं, न तृप्तोऽस्मि विषयेषु, त्वद्वयसा विषयानहं भोक्तुमिच्छामि । नात्रभवता प्रत्याख्यानं कर्तव्यमित्युक्तः स नैच्छत् तां जरामादातुम् । तञ्चापि पिता शशाप त्वत्प्रसूतिर्न राज्यार्हो भविष्यतीति ।

अनन्तरञ्च द्रुह्युं तुर्वसुमणुञ्च पृथिवीपतिर्जराग्रहणार्थं स्वयौवनप्रदानाय च नोदयामास । तैरप्येकैकेन प्रत्याख्यातस्तांश्च शशाप । अथ शर्मिष्ठतनयमशेषकनीयांसं पूरुं तथैवाह । स चातिप्रवणमतिः

प्रणम्य पितरं सबहुमानं, महान् प्रसादोऽयमस्माकमित्युदारमभिधाय जरां प्रतिजग्राह, स्वकीयञ्च यौवनं पित्रे ददौ। सोऽपि च नवं यौवनमासाद्य धर्माविरोधेन यथाकामं यथाकालोपपन्नं यथोत्साहं विषयांश्चचार सम्यक्प्रजापालनमप्यकरोत्। विश्वाच्या देवयान्या च सहोपभोगं भुक्त्वा कामानामन्तमवाप्स्यामीत्यनुदिनं तन्मनस्को बभूव। अनुदिनञ्चोपभोगतः कामानतीव रम्यान्मेने। ततश्चैवमगायत्—

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥ १॥
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः।
एकस्यापि न पर्याप्तं तदित्यतितृषं त्यजेत्॥ २॥
यदा न कुरुते भावं सर्वभूतेषु पापकम्।
समदृष्टेस्तदा पुंसः सर्वा एव सुखा दिशः॥ ३॥
या दुस्त्यजा दुर्मतिभिर्या न जीर्य्यति जीर्यतः।
तां तृष्णां संत्यजन्प्राज्ञः सुखेनैवाभिपूर्यते॥ ४॥
पूर्णं वर्षसहस्रं मे विषयासक्तचेतसः।
तथाप्यनुदिनं तृष्णा ममैतेष्वेव जायते॥ ५॥
तस्मादेतामहं त्यक्त्वा ब्रह्मण्याधाय मानसम्।
निर्द्वन्द्वो निर्ममो भूत्वा चरिष्यामि मृगैः सह॥ ६॥

---

पूरोः सकाशादादाय जरां दत्वा च यौवनम्।
राज्येऽभिषिच्य पूरुञ्च प्रययौ तपसे वनम्॥ ७॥
दिशि दक्षिणपूर्वस्यां तुर्वसुं प्रत्यथादिशत्।
प्रतीच्याञ्च तथा द्रुह्युं दक्षिणापथतो यदुम्॥ ८॥

उदीच्याश्च तथैवाणुं कृत्वा मण्डलिनो नृपान् ।
सर्वपृथ्वीपतिं पूरुं सोऽभिषिच्य वनं ययौ ॥ ९ ॥

---

## ३—नीतिमान् वानरः

अस्ति कस्मिंश्चिन्नगरे चन्द्रो नाम भूपतिः प्रतिवसति स्म । तस्य पुत्रा वानरक्रीडारता वानरयूथं नित्यमेवानेकभोजनभक्ष्यादिभिः पुष्टिं नयन्ति स्म । अथ वानरयूथाधिपो यः स औशनसबार्हस्पत्यचाणक्यमतवित्तदनुष्ठाता च तान्सर्वानप्यध्यापयति स्म । अथ तस्मिन्राजगृहे लघुकुमारवाहनयोग्यं मेषयूथमस्ति । तन्मध्यादेको जिह्वालौल्यादहर्निशं निःशङ्कं महानसे प्रविश्य यत्पश्यति तत्सर्वं भक्षयति । ते च सूपकारा यत्किंचित्काष्ठं मृण्मयं भाजनं कांस्यपात्रं ताम्रपात्रं वा पश्यन्ति तेनाशु ताडयन्ति । सोपि वानरयूथपस्तद्दृष्ट्वा व्यचिन्तयत् । मेषसूपकारकलहोऽयं वानराणां क्षयाय भविष्यति, यतोऽन्नस्वादलम्पटोऽयं मेषो महाकोपाश्च सूपकारा यथासन्नवस्तुना प्रहरन्ति । यद्यपि वस्तुनोऽभावात्कदाचिदुल्मुकेन ताडयिष्यन्ति तदूर्णाप्रचुरोऽयं मेषः स्वल्पेनापि वह्निना प्रज्वलिष्यति । तद्दह्यमानः पुनरश्वकुट्यां समीपवर्तिन्यां प्रवेक्ष्यति । सापि तृणप्राचुर्याज्ज्वलिष्यति । ततोऽश्वा वह्निदाघमवाप्स्यन्ति । शालिहोत्रेण पुनरेतदुक्तम् । यद्वानरवसयाऽश्वानां वह्निदाघदोषः प्रशाम्यति । तन्नूनमेतेन भाव्यमत्र निश्चयः । एवं निश्चित्य सर्वान्वानरानाहूय रहसि प्रोवाच । यत्

मेषेण सूपकाराणां कलहो यत्र जायते ।
स भविष्यत्यसंदिग्धं वानराणां क्षयावहः ॥ १ ॥

तस्मात्स्यात्कलहो यत्र गृहे नित्यं विकारणः ।
तद्गृहं जीवितं वाञ्छन्दूरतः परिवर्जयेत् ॥ २ ॥

तथा च ।

कलहान्तानि हर्म्याणि कुवाक्यान्तं च सौहृदम् ।
कुराजान्तानि राष्ट्राणि कुकर्मान्तं यशो नृणाम् ॥ ३ ॥

तन्न यावत्सर्वेषां संक्षयो भवति तावदेतद्राजगृहं संत्यज्य वनं गच्छामः । अथ तत्तस्य वचनमश्रद्धेयं श्रुत्वा मदोद्धता वानराः प्रहस्य प्रोचुः । भो भवतो वृद्धभावाद्बुद्धिवैकल्यं संजातं येनैतद्ब्रवीषि ।

उक्तं च ।

वदनं दशनैर्हीनं लाला स्रवति नित्यशः ।
न मतिः स्फुरति क्वापि बाले वृद्धे विशेषतः ॥ ४ ॥

न वयं स्वर्गसमानोपभोगान्नानाविधान्भक्ष्यविशेषान्राजपुत्रैः स्वहस्तदत्तानमृतकल्पान्परित्यज्य तत्राटव्यां कषायकटुतिक्तक्षाररूक्षफलानि भक्षयिष्यामः । तच्छ्रुत्वाश्रुकलुषां दृष्टिं कृत्वा स प्रोवाच । रे रे मूर्खा यूयमेतस्य सुखस्य परिणामं न जानीथ । पाकरसास्वादनप्रायमेतत्सुखं परिणामे विषवद्भविष्यति । तदहं कुलक्षयं स्वयं नावलोकयिष्यामि । सांप्रतं वनं यास्यामि ।

उक्तं च—

मित्रं व्यसनसंप्राप्तं स्वस्थानं परपीडितम् ।
धन्यास्ते ये न पश्यन्ति देशभङ्गं कुलक्षयम् ॥ ५ ॥

एवमभिधाय सर्वास्तान्परित्यज्य स यूथाधिपोऽटव्यां गतः । अथ तस्मिन्गतेऽन्यस्मिन्नहनि स मेषो महानसे प्रविष्टो यावत्सूपकारेण नान्यत्किंचित् समासादितं तावदर्धज्वलितकाष्ठेन ताडय-

मानो जाज्वल्यमानशरीरः शब्दायमानोऽश्वकुट्यां प्रत्यासन्नवर्तिन्यां प्रविष्टः। तत्र तृणप्राचुर्ययुक्तायां क्षितौ तस्य प्रलुठतः सर्वत्रापि वह्निज्वालास्तथा समुत्थिता यथा केचिदश्वाः स्फुटितलोचनाः पञ्चत्वं गताः केचिद्बन्धनानि त्रोटयित्वार्धदग्धशरीरा इतश्चेतश्च हेषायमाणा धावमानाः सर्वमपि जनसमूहमाकुलीचक्रुः। अत्रान्तरे राजा सविषादः शालिहोत्रज्ञान्वैद्यानाहूय प्रोवाच। भोः प्रोच्यतामेषामश्वानां कश्चिद्दाहोपशमनोपायः। तेऽपि शास्त्राणि संचिन्त्य प्रोचुः। देव प्रोक्तमत्र विषये भगवता शालिहोत्रेण यत्—

> कपीनां मेदसा दोषो वह्निदाहसमुद्भवः।
> अश्वानां नाशमभ्येति तमः सूर्योदये यथा ॥ ६ ॥

तत्क्रियतामेतच्चिकित्सितं द्राग्यावन्नैतेन दाहदोषेण विनश्यन्ति। सोपि तदाकर्ण्य समस्तवानरवधमादिष्टवान्। किं बहुना। सर्वेऽपि ते वानरा विविधायुधलकुटपाषाणादिभिर्व्यापादिता। इति। अथ सोपि वानरयूथपस्तं पुत्रपौत्रभ्रातृसुतभागिनेयादिसंक्षयं ज्ञात्वा परं विषादमुपागतः। स त्यक्ताहारक्रियो वनाद्वनं पर्यटति। अचिन्तयच्च। कथमहं तस्य नृपापसदस्यानृणताकृत्येनापकृत्यं करिष्यामि। उक्तञ्च।

> मर्षयेद्धर्षणां योऽत्र वंशजां परनिर्मिताम्।
> भयाद्वा यदि वा कामात्स ज्ञेयः पुरुषाधमः ॥ ७ ॥

अथ तेन वृद्धवानरेण कुत्रचित्पिपासाकुलेन भ्रमता पद्मिनीषण्डमण्डितं सरः समासादितम्। तद्यावत्सूक्ष्मेक्षिकयाऽवलोकयति तावद्वनचरमनुष्याणां पदपङ्क्तिप्रवेशोऽस्ति न निष्क्रमणम्। ततश्चिन्तितम्। नूनमत्र जलान्ते दुष्टग्राहेण भाव्यम्। तत्पद्मिनी-

नालमादाय दूरस्थोऽपि जलं पिबामि। तथानुष्ठिते तन्मध्या-द्राक्षसो निष्क्रम्य रत्नमालाविभूषितकण्ठस्तमुवाच। भो अत्र यः सलिले प्रवेशं करोति स मे भक्ष्य इति। तन्नास्ति धूर्ततरस्त्वत्समोऽन्यो यत्पानीयमनेन विधिना पिबसि। ततस्तुष्टोऽहम्। प्रार्थय हृदयवाञ्छितम्। कपिराह। भोः कियती भक्षणशक्तिः। स आह। शतसहस्रायुतलक्षाण्यपि जलप्रविष्टानि भक्षयामि। बाह्यतः शृगालोऽपि मां दूषयति। वानर आह। अस्ति मे भूपतिना सहात्यन्तं वैरम्। यद्येनां रत्नमालां मे प्रयच्छसि तत्सपरिवारमपि तं भूपतिं वाक्प्रपञ्चेन लोभयित्वात्र सरसि यथा प्रविशति तथा करोमि। सोऽपि श्रद्धेयं वचस्तस्य श्रुत्वा रत्नमालां दत्त्वा प्राह। भो मित्र, यत्समुचितं भवति तत्कर्त्तव्यमिति। वानरोऽपि रत्नमालाभूषितकण्ठो वृक्षप्रासादेषु परिभ्रमञ्जनैर्दृष्टः पृष्टश्च। भो यूथप भवानियन्तं कालं कुत्र स्थितः। भवतेदृग्रत्नमाला कुत्र लब्धा या दीप्त्या सूर्यमपि तिरस्करोति। वानरः प्राह। अस्ति कुत्रचिदरण्ये गुप्ततरं महत्सरो धनदनिर्मितम्। तत्र सूर्येऽर्धोदिते रविवासरे यः कश्चिन्निमज्जति स धनदप्रसादादीदृग्रत्नमालाविभूषितकण्ठो निःसरति। अथ भूभुजा तदाकर्ण्य स वानरः समाहूतः पृष्टश्च। भो यूथाधिप किं सत्यमेतत्। रत्नमालासनाथं सरोऽस्ति क्वापि। कपिराह। स्वामिन् एष प्रत्यक्षतया मत्कण्ठस्थितया रत्नमालया न प्रत्ययस्ते। तद्यदि रत्नमालाप्रयोजनं तन्मया सह कमपि प्रेषय येन दर्शयामि। तच्छ्रुत्वा नृपतिराह। यद्येवं तदहं सपरिजनः स्वयमेष्यामि येन प्रभूता रत्नमालाः संपद्यन्ते। वानर आह। स्वामिन् एवं क्रियताम्। तथानुष्ठिते भूपतिना सह रत्नमालालोभेन सर्वे सकलत्रभृत्याः

प्रस्थिताः वानरोऽपि राज्ञा दोलाधिरूढेन स्वोत्सङ्ग आरोपितः सुखेन प्रीतिपूर्वमानीयते । अथवा साध्विदमुच्यते ।

तृष्णे देवि नमस्तुभ्यं यथा वित्तान्विता अपि ।
अकृत्येषु नियोज्यन्ते भ्राम्यन्ते दुर्गमेष्वपि ॥ ८ ॥

तथा च ।

इच्छति शती सहस्रं सहस्री लक्षमीहते ।
लक्षाधिपस्तथा राज्यं राज्यस्थः स्वर्गमीहते ॥ ९ ॥
जीर्यन्ते जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
जीर्यतः चक्षुषी श्रोत्रे तृष्णैका तरुणायते ॥१०॥

अथ तत्सरः समासाद्य वानरः प्रत्यूषसमये राजानमुवाच । देव अत्रार्धोदिते सूर्येऽन्तः प्रविष्टानां सिद्धिर्भवति। तत्सर्वोऽपि जन एकदैव प्रविशतु । त्वया पुनर्मया सह प्रवेष्टव्यं येन पूर्वदृष्टस्थानमासाद्य प्रभूतास्ते रत्नमाला दर्शयामि । अथ प्रविष्टास्ते लोकाः सर्वे भक्षिता राक्षसेन । अथ तेषु चिरायमाणेषु राजा वानरमाह । भो यूथाधिप किमिति चिरायते मे जनः । तच्छ्रुत्वा वानरः सत्वरं वृक्षमारुह्य राजानमुवाच । भो दुष्ट नरपते राक्षसेनान्तःसलिलस्य स्थितेन भक्षितस्ते परिजनः । साधितं मया कुलक्षयजं वैरम् । तद्गम्यताम् । त्वं स्वामीति मत्वा नात्र प्रवेशितः । उक्तं च ।

कृते प्रतिकृतिं कुर्याद्धिंसिते प्रतिहिंसितम् ।
न तत्र दोषं पश्यामि दुष्टे दुष्टं समाचरेत् ॥११॥

तत्त्वया मम कुलक्षयः कृतो मया पुनस्तवेति । अथैतदाकर्ण्य राजा शोकाविष्टः पदातिरेकाकी यथायातमार्गेण निष्क्रान्तः । अथ तस्मिन्भूपतौ गते राक्षसस्तृप्तो जलान्निष्क्रम्य सानन्दमिदमाह ।

हृतः शत्रुः कृतं मित्रं रत्नमाला च हारिता ।
नालेनास्वादितं तोयं साधु भो वटवानर ॥१२॥

अतोऽहं ब्रवीमि ।

यो लौल्यात्कुरुते कर्म नैवोदर्कमवेक्षते ।
विडम्बनामवाप्नोति स यथा चन्द्रभूपतिः ॥

---

## ४—हेमन्तः

स कदाचित् प्रभातायां शर्वर्यां रघुनन्दनः ।
प्रययावभिषेकार्थं रम्यां गोदावरीं नदीम् ॥ १ ॥
प्रह्वःकलशहस्तस्तु सीतया सह वीर्यवान् ।
पृष्ठतोऽनुव्रजन् भ्राता सौमित्रिरिदमब्रवीत् ॥ २ ॥
अयं स कालः संप्राप्तः प्रियो यस्ते प्रियंवद ।
अलंकृत इवाभाति येन संवत्सरः शुभः ॥ ३ ॥
नीहारपरुषो लोकः पृथिवी सस्यमालिनी ।
जलान्यनुपभोग्यानि सुभगो हव्यवाहनः ॥ ४ ॥
प्राज्यकामा जनपदाः संपन्नतरगोरसाः ।
विचरन्ति महीपाला यात्रार्थं विजिगीषवः ॥ ५ ॥
सेवमाने दृढं सूर्ये दिशमन्तकसेविताम् ।
विहीनतिलकेव स्त्री नोत्तरा दिक् प्रकाशते ॥ ६ ॥
प्रकृत्या हिमकोशाढ्यो दूरसूर्यश्च सांप्रतम् ।
यथार्थनामा सुव्यक्तं हिमवान् हिमवान् गिरिः ॥ ७ ॥
अत्यन्तसुखसंचारा मध्याह्ने स्पर्शतः सुखाः ।
दिवसाः सुभगादित्याश्छायासलिलदुर्भगाः ॥ ८ ॥

मृदुसूर्याः सुनीहाराः पटुशीताः समाहिताः ।
शून्यारण्या हिमध्वस्ता दिवसा भान्ति सांप्रतम् ॥ ९ ॥
रविसंक्रान्तसौभाग्यस्तुषारारुणमण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥ १० ॥
ज्योत्स्ना तुषारमलिना पौर्णमास्यां न राजते ।
सीतेव चातपश्यामा लक्ष्यते न च शोभते ॥ ११ ॥
प्रकृत्या शीतलस्पर्शो हिमविद्धश्च सांप्रतम् ।
प्रवाति पश्चिमो वायुः काले द्विगुणशीतलः ॥ १२ ॥
बाष्पच्छन्नान्यरण्यानि यवगोधूमवन्ति च ।
शोभन्तेऽभ्युदिते सूर्ये नदद्भिः क्रौञ्चसारसैः ॥ १३ ॥
खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः ।
शोभन्ते किंचिदालम्बाः शालयः कनकप्रभाः ॥ १४ ॥
मयूखैरुपसर्पद्भिर्हिमनीहारसंवृतैः ।
दूरमभ्युदितः सूर्यः शशाङ्क इव लक्ष्यते ॥ १५ ॥
आग्राह्यवीर्यः पूर्वाह्णे मध्याह्ने स्पर्शतः सुखः ।
संसक्तः किंचिदापाण्डुरातपः शोभते क्षितौ ॥ १६ ॥
अवश्यायनिपातेन किंचित्प्रक्लिन्नशाद्वला ।
वनानां शोभते भूमिर्निविष्टतरुणातपा ॥ १७ ॥
स्पृशन् सुविपुलं शीतमुदकं द्विरदः सुखम् ।
अत्यन्ततृषितो वन्यः प्रतिसंहरते करम् ॥ १८ ॥
एते हि समुपासीना विहगा जलचारिणः ।
नावगाहन्ति सलिलमप्रगल्भा इवाहवम् ॥ १९ ॥
अवश्यायतमोनद्धा नीहारतमसावृताः ।
प्रसुप्ता इव लक्ष्यन्ते विपुष्पा वनराजयः ॥ २० ॥

बाष्पसंछन्नसलिला रुतविज्ञेयसारसाः ।
हिमार्द्रवालुकास्तीरैः सरितो भान्ति सांप्रतम् ॥ २१ ॥
तुषारपतनाच्चैव मृदुत्वाद्भास्करस्य च ।
शैत्यादगाग्रस्थमपि प्रायेण रसवज्जलम् ॥ २२ ॥
जराझर्झरितैः पत्रैः शीर्णकेसरकर्णिकैः ।
नालशेषा हिमध्वस्ता न भान्ति कमलाकराः ॥ २३ ॥

---

## ५—सगरस्याश्वमेधः

कश्यपदुहिता सुमतिर्विदर्भराजतनया च केशिनी द्वे भार्य्ये सगरस्यास्ताम् ।

ताभ्याञ्चापत्यार्थमाराधित और्वः परमेण समाधिना वरमदात् ।

एका वंशधरमेकं पुत्रम्, अपरा षष्टिं पुत्रसहस्राणि जनयिष्यतीति यस्या यदभिमतं तदिच्छया गृह्यताम् । इत्युक्ते केशिनी पुत्रमेकं, सुमतिः पुत्रसहस्राणि षष्टिं वव्रे । तथेति च ऋषिगणाभिहिते अल्पैरेवाहोभिरेकैकमसमञ्जसं नाम वंशधरं पुत्रमसूत केशिनी । विनतातनयायास्तु सुमत्याः षष्टिः पुत्रसहस्राण्यभवन् ।

तस्मादसमञ्जसोऽशुमान् नाम कुमारो जज्ञे । स तु असमञ्जा बाल्यादेवापवृत्तः । पिता चास्याचिन्तयम् अयमतीतबाल्यो बुद्धिमान् भविष्यतीति । अथ तत्रापि वयस्यतीते तच्चरितमेवैनं पिता तत्याज ।

तान्यपि षष्टिः कुमारसहस्राणि असमञ्जसश्चरितमनुचक्रुः ततश्चासमञ्जसश्चरितानुकारिभिः सागरैरपध्वस्तयज्ञादिसन्मार्गे

जगति देवाः सकलविद्यामयमसंस्पृष्टमशेषदोषैर्भगवतः पुरुषोत्तमस्यांशभूतं कपिलर्षिं प्रणम्य तदर्थमूचुः।

भगवन्! एभिः सगरतनयैरसमञ्जसश्चरितमनुगम्यते, कथमेवमेभिरनुसरद्भिर्जगद्भविष्यतीत्यार्तजगत्परित्राणाय च भगवतोऽत्र शरीरग्रहणम् इत्याकर्ण्य भगवान् 'अल्पैरेव दिनैरेते विनङ्क्ष्यन्ति' इत्युक्तवान्।

तत्रान्तरे च सगरो ह्यश्वमेधमारेभे। तत्र च तत्पुत्रैरधिष्ठितमस्याश्वं कोऽप्यपहृत्य भुवो विवरं प्रविवेश। ततश्चाश्वान्वेषणाय तनयान् युयोज। ततस्तत्तनयाश्चाश्वखुरपदवीमनुसरन्तोऽतिनिर्बन्धेन बभ्रमुर्वसुधातलमेकैको योजनं योजनमवनेश्च चखान।

पाताले चाश्वं परिभ्रमन्तमवनीपतिनन्दनास्ते ददृशुः। नातिदूरस्थितश्च भगवन्तमपघने शरत्कालेऽर्कमिव तेजोभिरनवरतमूर्ध्वमधश्चाशेषदिशश्चोद्भासयमानं कपिलर्षिमपश्यन्। ततश्चोद्यतायुधा दुरात्माऽयमस्मदपकारी यज्ञविघातकर्त्ता हयहर्त्ता हन्यतां हन्यतामित्यधावन्। ततश्च तेनापि भगवता किञ्चिदीषत्परिवर्त्तितलोचनेन विलोकिताः स्वशरीरसमुत्थेनाग्निना दह्यमाना विनेशुः।

सगरोऽप्यधिगम्याश्वानुसारि तत् पुत्रबलमशेषं परमर्षिकपिलतेजसा दग्धमंशुमन्तमसमञ्जसः पुत्रमश्वानयनाय नोदयामास।

स तु सगरतनयखातमार्गेण कपिलमुपगम्य भक्तिनम्रस्तथा तथा च तुष्टाव यथैनं भगवानाह, गच्छैनं पितामहायाश्वं प्रापय, वरं वृणीष्व च। पुत्र! पौत्रश्च ते स्वर्गाद् गङ्गामानेष्यतीति।

अथांशुमानपि ब्रह्मदण्डहतानामस्मत्पितॄणां स्वर्गाय स्वर्गायोग्यानां स्वर्गप्राप्तिकरं वरमस्माकं भगवान् प्रयच्छतु इत्याह।

तच्चाह भगवान् उक्तमेवैतन्मया पौत्रस्ते त्रिदिवाद् गङ्गा भुवमाने-ष्यतीति । तदम्भसा संस्पृष्टेष्वस्थिभस्मस्वेते स्वर्गमारोक्ष्यन्ति । भगवद्विष्णुपादाङ्गुष्ठविनिर्गतजलस्य हि तन्माहात्म्यं यन्न केव-लमभिसन्धिपूर्वकस्नानाद्युपभोगेषूपकारकमनभिसंहितमप्यपेतप्राण-स्यास्थिचर्मस्नायुकेशाद्युत्सृष्टं शरीरजं यद् भूपतितं तत्स्पृष्टं सद्यः शरीरिणं स्वर्गं नयतीत्युक्तः प्रणम्य च भगवते अश्वमादाय पितामहयज्ञमाजगाम ।

सगरोऽप्यश्वमादाय तं यज्ञं समापयामास, सागरं चात्मज-प्रीत्या पुत्रत्वे कल्पयामास ।

---

## ६—रावणविभीषणयोः संवादः

विभीषणः—( सविमर्षम् ) अहो नु खलु महाराजस्य विपरीता बुद्धिः संवृत्ता । कुतः—

मयोक्तो मैथिली तस्मै बहुशो दीयतामिति ।
न मे शृणोति वचनं सुहृदां शोककारणात ॥

( उपेत्य ) जयतु महाराजः ।

रावणः—विभीषण ! एह्येहि । उपविश ।

विभीषणः—एष एष उपविशामि । ( उपविशति ) ।

रावणः—विभीषण ! निर्व्विण्णमिव त्वां लक्षये

विभीषणः—निर्व्वेद एव खल्वनुक्तग्राहिणं स्वामिनमुपाश्रितस्य भृत्यजनस्य ।

रावणः—छिद्यताम् एषा कथा । तमेव तावद् वानरमानय ।

विभीषणः—यद् आज्ञापयति महाराजः । ( निष्क्रान्तः ) ।

( ततः प्रविशति राक्षसैर्गृहीतो हनूमान् । )

सर्व्वे—आः ! इत इतः

हनूमान्—नैवाहं धर्षितस्तेन नैर्ऋतेन दुरात्मना ।
स्वयं ग्रहणमापन्नो राक्षसेशदिदृक्षया ॥

( उपगम्य ) भो राजन् ! अपि कुशली भवान् ?

रावणः—( सावज्ञम् ) विभीषण ! किमस्य तत् कर्म्म ?

विभीषणः—प्रष्टुमर्हति महाराजः 'कस्त्वम्' इति ।

रावणः—भो वानर ! कस्त्वम् ? केन कारणेनास्माकमन्तःपुरं प्रविष्टः ?

हनूमान्—भोः श्रूयताम्

अञ्जनायां समुत्पन्नो मारुतस्यौरसः सुतः ।
प्रेषितो राघवेणाहं हनूमान् नाम वानरः ॥

विभीषण—महाराज ! किं श्रुतम् ?

रावणः—किं श्रुतेन ?

विभीषणः—हनुमन् ! किमाह तत्रभवान् राघवः ?

हनूमान्—भोः श्रूयताम् आर्य्यरामचन्द्रस्य शासनम् ।

रावणः—कथं कथं रामशासनम् इत्याह ! आः हन्यताम् अयं वानरः

विभीषणः—प्रसीदतु महाराजः । सर्व्वापराधेष्ववध्याः खलु दूताः । अथवा रामचन्द्रस्य वचनं श्रुत्वा पश्चात् यथेष्टं कर्तुमर्हति महाराजः ।

रावणः—भो वानर ! किमाह स मानुषः ?

हनूमान्—भोः श्रूयताम् ।

वरशरणमुपेहि शंकरं वा
प्रविश च दुर्गतमं रसातलं वा ।
शरवरपरिभिन्नसर्वगात्रं
यमसदनं प्रति यापयाम्यहं त्वाम् ॥ इति

रावणः—ह ह ह !
दिव्यास्त्रैस्त्रिदशगणा मयाभिभूता
दैत्येन्द्रा मम वशवर्तिनः समस्ताः ।
पौलस्त्योऽप्यपहृतपुष्पकोऽवसन्नो
भो ! रामः कथमभियाति मानुषो माम् ॥

हनूमान्—एवंविधेन भवता किमर्थं प्रच्छन्नं तस्य दारापहरणं कृतम् ?

विभीषणः—सम्यगाह हनूमान् ।
अपास्य मायया रामं त्वया राक्षसपुङ्गव ।
भिक्षुवेशं समास्थाय च्छलेनापहृता हि सा ॥

रावणः—विभीषण ! किं विपक्षपक्षम् अवलम्बसे ?

विभीषणः—प्रसीद राजन् ! वचनं हितं मे
प्रदीयतां राघवधर्मपत्नी ।
इदं कुलं राक्षसपुङ्गवेन
त्वया हि नेच्छामि विपद्यमानम् ॥

रावणः—विभीषण ! अलम् अलं भयेन ।
कथं लम्बसटः सिंहो मृगेण विनिपात्यते ।
गजो वा सुमहान् मत्तः शृगालेन निहन्यते ॥

हनूमान्—भो रावण ! विपद्यमानभाग्येन भवता किं युक्तं राघवमेवं वक्तुम् ।

मा तावत् भोः—

नक्तंचरापसद रावण ! राघवं तं
वीराग्रगण्यमतुलं त्रिदशेन्द्रकल्पम् ।
प्रक्षीणपुण्य ! भवता भुवनैकनाथं
वक्तुं किमेवमुचितं गतसार ! नीचैः ?

रावणः—कथं कथं नामाभिधत्ते ? हन्यताम् अयं वानरः ।
अथवा दूतवधः खलु वंचनीयः । शंकुकर्ण ! लाङ्गूलम्
आदीप्य विसृज्यताम् अयं वानरः ।

शंकुकर्णः—यदाज्ञापयति महाराजः । इत इतः ।

रावणः—अथवा एहि तावत् ।

हनुमान्—अयमस्मि ।

रावणः—अभिधीयतां मद्वचनात् स मानुषः ।
अभिभूतो मया राम ! दारापहरणादपि ।
यदि तेऽस्ति धनुःश्लाघा दीयतां मे रणे महान् ॥

हनुमान्—अचिराद् द्रक्ष्यसि

अभिहतवरवप्रगोपुराट्टां
रघुवरकाम्र्मुकनादनिर्जितस्त्वम् ।
हरिगणपरिपीडितैः समन्तात्
प्रमदवनैरभिसंवृतां स्वलङ्काम् ॥

रावणः—आः ! निर्वास्यताम् अयं वानरः ।

राक्षसाः—इत इतः ।

( रक्षोभिः सह निष्क्रान्तो हनुमान् )

विभीषणः—प्रसीदतु प्रसीदतु महाराजः । अस्ति काचिद् विवक्षा
महाराजस्य हितमन्तरेण ।

२

रावणः—उच्यताम् । तच्छ्रेयो वयमपि श्रोतारः ।

विभीषणः—सर्व्वथा राक्षसकुलस्य विनाशोऽभ्यागत इति मन्ये ।

रावणः—केन कारणेन ?

विभीषणः—महाराजस्य विप्रतिपत्त्या

रावणः—का मे विप्रतिपत्तिः

विभीषणः—ननु सीतापहरणमेव

रावणः—सीतापहरणेन को दोषः स्यात् ?

विभीषणः—अधर्म्मश्च ।

रावणः—च–शब्देन सावशेषमिव ते वचनम् । तद् ब्रूहि ।

विभीषणः—तदेव ननु

रावणः—विभीषण ! किं गूहसे ? मम खलु प्राणैः शापितः
स्या यदि सत्यं न ब्रूयाः

विभीषणः—अभयं दातुमर्हति महाराजः ।

रावणः—दत्तमभयम् उच्यताम् ।

विभीषणः—बलवद्विग्रहश्च

रावणः—( सरोषम् ) कथं कथं बलवद्विग्रहो नाम ?

शत्रुपक्षमुपाश्रित्य मामयं राक्षसाधमः ।
क्रोधमाहारयंस्तीव्रमभीरुरभिभाषते ॥

कोऽत्र भोः ?

ममानवेक्ष्य सौभ्रात्रं शत्रुपक्षमुपाश्रितम् ।
नोत्सहे पुरतो द्रष्टुं तस्मादेष निरस्यताम् ॥

विभीषणः—प्रसीदतु प्रसीदतु महाराजः । अहमेव यास्यामि ।

शासितोऽहं त्वया राजन् ! प्रयामि न च दोषवान् ।
त्यक्त्वा रोषं च कामं च यथा कार्य्यं तथा कुरु ॥

( परिक्रम्य ) अयमहमिदानीम्
अद्यैव तं कमललोचनमुग्रचापं
रामं हि रावणवधाय कृतप्रतिज्ञम् ।
संश्रित्य संश्रितहितप्रथितं नृदेवं
नष्टं निशाचरकुलं पुनरुद्धरिष्ये ॥

( निष्क्रान्तः । )

रावणः—हन्त निर्गतो विभीषणः । यावद् अहमपि नगररक्षां सम्पादयामि ।

( निष्क्रान्तः )

---

## ७—एकलव्यस्य गुरुभक्तिः

वैशम्पायन उवाच

ततो निषादराजस्य हिरण्यधनुषः सुतः ।
एकलव्यो महाराज द्रोणमभ्याजगाम ह ॥१॥
न स तं प्रतिजग्राह नैषादिरिति चिन्तयन् ।
शिष्यं धनुषि धर्म्मज्ञस्तेषामेवान्ववेक्षया ॥२॥
द्रोणस्य शिरसा पादौ स तु गृह्य परन्तप ।
अरण्यमनुसम्प्राप्य कृत्वा द्रोणं महीमयम् ॥३॥
तस्मिन्नाचार्य्यवृत्तिञ्च परमामास्थितस्तदा ।
इष्वस्त्रे योगमातस्थे परं नियममास्थितः ॥४॥
परया श्रद्धयोपेतो योगेन परमेण च ।
विमोक्षादानसन्धाने लघुत्वं परमाप सः ॥५॥

अथ द्रोणाभ्यनुज्ञाताः कदाचित् कुरुपाण्डवाः ।
रथैर्विनिर्ययुः सर्व्वे मृगयामरिमर्दनाः ॥६॥
तत्रोपकरणं गृह्य नरः कश्चित् यदृच्छया ।
राजन्ननुजगामैकः श्वानमादाय पाण्डवान् ॥७॥
तेषां विचरतां तत्र तत्तत्कर्म्मचिकीर्षया ।
श्वा चरन् स पथा क्रीडन् नैषादिं प्रतिजग्मिवान् ॥८॥
स कृष्णमलदिग्धाङ्गं कृष्णाजिनजटाधरम् ।
नैषादिं श्वा समालक्ष्य भषंस्तस्थौ तदन्तिके ॥९॥
तदा तस्याथ भषतः शुनः सप्त शरान् मुखे ।
लाघवं दर्शयन्नस्त्रे मुमोच युगपद् यथा ॥१०॥
स तु श्वा शरपूर्णास्यः पाण्डवानाजगाम ह ।
तं दृष्ट्वा पाण्डवा वीराः परं विस्मयमागताः ॥११॥
लाघवं शब्दवेधित्वं दृष्ट्वा तत् परमं तदा ।
प्रेक्ष्य तं व्रीडिताश्चासन् प्रशशंसुश्च सर्व्वशः ॥१२॥
तं ततोऽन्वेषमाणास्ते वने वननिवासिनम् ।
ददृशुः पाण्डवा राजन्नस्यन्तमनिशं शरान् ॥१३॥
न चैनमभ्यजानंस्ते तदा विकृतदर्शनम् ।
तथैनं परिपप्रच्छुः को भवान् कस्य वेत्युत ॥१४॥

एकलव्य उवाच ।

निषादाधिपतेर्वीरा हिरण्यधनुषः सुतम् ।
द्रोणशिष्यञ्च मां वित्त धनुर्वेदकृतश्रमम् ॥१५॥

वैशम्पायन उवाच ।

ते तमाज्ञाय तत्त्वेन पुनरागम्य पाण्डवाः ।
यथावृत्तं वने सर्व्वं द्रोणायाचख्युरद्भुतम् ॥१६॥

कौन्तेयस्त्वर्जुनो राजन्नेकलव्यमनुस्मरन् ।
रहो द्रोणं समासाद्य प्रणयादिदमब्रवीत् ॥ १७ ॥
नन्वहं परिरभ्यैकः प्रीतिपूर्व्वमिदं वचः ।
भवतोक्तो न मे शिष्यस्त्वद्विशिष्टो भविष्यति ॥ १८ ॥
अथ कस्मान्मद्विशिष्टो लोकादपि च वीर्य्यवान् ।
अन्योऽस्ति भवतः शिष्यो निषादाधिपतेः सुतः ॥ १९ ॥

वैशम्पायन उवाच ।

मुहूर्त्तमिव तं द्रोणश्चिन्तयित्वा विनिश्चयम् ।
सव्यसाचिनमादाय नैषादिं प्रतिजग्मिवान् ॥ २० ॥
ददर्श मलदिग्धाङ्गं जटिलं चीरवाससम् ।
एकलव्यं धनुष्पाणिमस्यन्तमनिशं शरान् ॥ २१ ॥
एकलव्यस्तु तं दृष्ट्वा द्रोणमायान्तमन्तिकात् ।
अभिगम्योपसंगृह्य जगाम शिरसा महीम् ॥ २२ ॥
पूजयित्वा ततो द्रोणं विधिवत् स निषादजः ।
निवेद्य शिष्यमात्मानं तस्थौ प्राञ्जलिरग्रतः ॥ २३ ॥
ततो द्रोणोऽब्रवीत् राजन्नेकलव्यमिदं वचः ।
यदि शिष्योऽसि मे वीर वेतनं दीयतां मम ॥ २४ ॥

एकलव्य उवाच ।

किं प्रयच्छामि भगवन्नाज्ञापयतु मां गुरुः ।
न हि किञ्चिददेयं मे गुरवे ब्रह्मवित्तम ॥ २५ ॥

वैशम्पायन उवाच ।

तमब्रवीत्त्वयाऽङ्गुष्ठो दक्षिणो दीयतामिति ॥
एकलव्यस्तु तच्छ्रुत्वा वचो द्रोणस्य दारुणम् ।
प्रतिज्ञामात्मनो रक्षन् सत्ये च नियतः सदा ॥ २६ ॥

तथैव हृष्टवदनस्तथैवादीनमानसः ।
छित्वाऽविचार्य्य तं प्रादात् द्रोणायाङ्गुष्ठमात्मनः ॥२७॥
ततः शरं तु नैषादिरङ्गुलीभिर्व्यकर्षत ।
न तथा च स शीघ्रोऽभूद् यथा पूर्वं नराधिप ॥ २८ ॥

---

## ८—परार्थे जीवितव्ययः

( नेपथ्ये )—

हा पुत्रक शङ्खचूड़ कथं व्यापाद्यमानोऽद्य किल त्वं मया प्रेक्षितव्यः !

नायकः—( आकर्ण्य ) अये योषित इवार्तप्रलापः । तद्यावदुपसृत्य केयं कुतो वाऽस्या भयमिति स्फुटीकरोमि ।

( परिक्रामति )

( ततः प्रविशति क्रदन्त्या वृद्धयानुगम्यमानः शङ्खचूडो गोपायितवस्त्रयुगलश्च किंकरः )

वृद्धा—( सास्रम् ) हा पुत्रक शङ्खचूड कथं व्यापाद्यमानोऽद्य किल त्वं मया प्रेक्षितव्यः । ( चिबुके गृहीत्वा ) अनेन ते मुखचन्द्रेण विरहितमिदानीमन्धकारीभविष्यति पातालम् ।

शङ्खचूडः—अम्ब किमिति वैक्लव्येन सुतरामात्मानं पीडयसि ।

वृद्धा—( निर्वर्ण्य पुत्रस्याङ्गानि स्पृशन्ती )—हा पुत्र कथं तेऽदृष्टसूर्यकिरणं सुकुमारशरीरं निर्घृणहृदयो गरुड आहारयिष्यति

( कण्ठे गृहीत्वा रोदिति )

शङ्खचूडः—अम्ब अलं परिदेवितेन । पश्य

क्रोडीकरोति प्रथमं यदा जातमनित्यता ।
धात्रीव जननी पश्चात्तदा शोकस्य कः क्रमः ॥

( गन्तुमिच्छति )

वृद्धा—पुत्रक तिष्ठ मुहूर्तं यावत्ते वदनं प्रेक्षे ।

किङ्करः—एहि कुमार । किं त एतया भणन्या । पुत्रस्नेहमोहिता खल्वेषा राजकार्यं न जानाति ।

शङ्खचूडः—अयमागच्छामि ।

किङ्करः—( आत्मगतमग्रतोऽवलोक्य ) आनीतः खल्वेष मया वध्यशिलासमीपम् । यावदेतद्वध्यचिह्नं रक्तांशुकयुगलं दत्वा वध्यशिलां दर्शयामि ।

नायकः—अये इयमसौ योषित् । ( शङ्खचूडं दृष्ट्वा ) नूनमनेनास्याः सुतेन भवितव्यं यदर्थमाक्रन्दति । ( समन्तादवलोक्य ) न खल्वस्या भयकारणं किंचित्पश्यामि । कुतोऽस्या भयं भविष्यति । किमुपसृत्य पृच्छामि । अथवा प्रसक्त एवायमेतेषामालापः । कदाचिदत एवास्याभिव्यक्तिर्भविष्यति । तद्विटपान्तरितस्तावच्छृणोमि । ( तथा करोति )

किङ्करः—( सास्रं कृताञ्जलिः ) कुमार शङ्खचूड एवं स्वामिन आदेश इति कृत्वेदृशं निष्ठुरं मन्त्र्यते ।

शङ्खचूडः—भद्र कथय ।

किङ्करः—नागलोकस्वामी वासुकिस्त आज्ञापयति ।

शङ्खचूड—किमाज्ञापयति स्वामी ।

किङ्करः—इदं रक्तांशुकयुगलं परिधायारोह वध्यशिलाम् । येन त्वां रक्तांशुकचिह्नोपलक्षितं गरुडो गृहीत्वाहारं करिष्यतीति ।

नायकः—( सास्रम् ) कष्टमयमसौ तपस्वी वासुकिना परित्यक्तो गरुत्मत आहाराय दत्तः ।

किङ्करः—शङ्खचूड गृहाणैतत् ( वस्त्रयुगलमर्पयति )

शङ्खचूडः—( सादरम् ) उपनय । ( गृहीत्वा ) गृहीतः शिरसि स्वाम्यादेशः ।

वृद्धा—( पुत्रस्य हस्ते वाससी दृष्ट्वा सोरस्ताडम् ) हा वत्स इदं खलु वज्रपातसंनिभं संभाव्यते ।

किङ्करः—आसन्ना खलु गरुडस्यागमनवेला तल्लघ्वपक्रामामि । ( इति निष्क्रान्तः )

शङ्खचूडः—अम्ब समाश्वसिहि समाश्वसिहि ।

वृद्धा—( समाश्वस्य सास्रम् ) हा जातक हा पुत्रक हा मनोरथ-शतलब्ध कुत्र त्वां पुनः प्रेक्षिष्ये । ( कण्ठे गृहीत्वा रोदिति )

नायकः—अहो नैर्घृण्यं गरुत्मतः ।

शङ्खचूडः—अम्ब किमतिवैक्लव्येन । ननु समाश्वसिहि समा-श्वसिहि ।

वृद्धा—पुत्रक कथं समाश्वसिमि । किमेक एव पुत्रक इति कृत्वा जातानुकम्पेन न निवारितो नागराजेन वासुकिना । हा कृतान्तहतक निर्घृणहृदय कथमिदानीं त्वयैवं विस्तीर्णे जीवलोके मम पुत्रक एव स्मृतः । सर्वथा हतास्मि मन्दभागिनी । ( मूर्च्छां नाटयति )

नायकः—आर्तं कण्ठगतप्राणं परित्यक्तं स्वबन्धुभिः ।
त्राये नैनं यदि ततः कः शरीरेण मे गुणः ॥
( तद्यावदुपसर्पामि ) ।

शङ्खचूडः—अम्ब संस्तम्भयात्मानम् ।

वृद्धा—हा पुत्रक यदा नागलोकपरिरक्षकेण वासुकिना परित्यक्तोसि तदा कस्तेऽपरः परित्राणं करिष्यति ।

नायकः—( सत्वरमुपसृत्य ) नन्वहम् ।

वृद्धा—( ससंभ्रममुत्तरीयेण पुत्रमाच्छाद्य नायकमुपसृत्य ) विनतानन्दन व्यापादय माम् । अहं ते नागराजेनाहारनिमित्तं परिकल्पिता ।

नायकः—( सास्रम् ) अहो पुत्रवात्सल्यम् ।

अस्या विलोक्य मन्ये पुत्रस्नेहेन विक्लवत्वमिदम् ।
अकरुणहृदयः करुणां कुर्वीत भुजंगशत्रुरपि ॥

शङ्खचूडः—अम्ब अलं त्रासेन । न खल्वयं नागशत्रुः । पश्य

महाहिमस्तिष्कविभेदमुक्तरक्तच्छटाचर्चितचण्डचञ्चुः ।
क्वासौ गरुत्मान् क्व च नाम सौम्यस्वभावरूपाकृतिरेष साधुः ।

वृद्धा—हा पुत्रक अहं खलु तव मरणभीता सर्वमेव जीवलोकं गरुडमयं प्रेक्षे ।

नायकः—अम्ब मा भैषीः । नन्वहं विद्याधरस्तव पुत्ररक्षणार्थमेवागतः ।

वृद्धा—पुत्र चिरं जीव ।

नायकः—ममैतदम्बार्पय वध्यचिह्नं प्रावृत्य यावद्विनतात्मजाय ।
पुत्रस्य ते जीवितरक्षणाय स्वदेहमाहारयितुं ददामि ॥

वृद्धा—( कर्णौ पिधाय ) प्रतिहतममङ्गलम् । जात त्वं शङ्खचूडनिर्विशेष एव पुत्रकः । अथवा शङ्खचूडादधिको य एवं बन्धुजनपरित्यक्तं मे पुत्रकं निजशरीरदानेन रक्षितुमिच्छसि ।

शङ्खचूडः—( सस्मितम् ) अहो जगद्विपरीतमस्य महासत्वस्य चरितम् । (नायकमुद्दिश्य) भो महात्मन् दर्शिता त्वयेयमात्मप्रदा-

नाध्यवसायान्निर्व्याजा मयि दयालुता । तदलमनेन निर्बन्धेन ।
पश्य—जायन्ते च म्रियन्ते च मादृशाः क्षुद्रजन्तवः ।
परार्थदत्तदेहानां त्वादृशो संभवः कुतः ॥
ततः किमनेन ते मरणाग्रहेण । प्रसीद मुच्यतामयमध्यवसायः ।

नायकः—( शङ्खचूडं हस्ते गृहीत्वा ) कुमार शङ्खचूड न मे चिराल्लब्धावसरस्यास्य परार्थसंपादनमनोरथस्यान्तरायं कर्त्तुमर्हसि । तदलं विकल्पेन । दीयतां मे तद् वध्यचिह्नम् ।

शङ्खचूडः—भो महासत्व किमनेन वृथात्मायासेन । न खलु शंखचूडः शङ्खपालकुलं मलिनीकरोति । अथ ते वयमनुकम्पनीयास्तदियमस्मद्विपत्तिविक्लवाम्बा न यथा जीवितं जह्यात्तथाभ्युपायश्चिन्त्यताम् ।

नायकः—किमत्र चिन्त्यते । ननु चिन्तित एवोपायः स च त्वदायत्तः ।

शङ्खचूडः—कथमिव ।

नायकः—म्रियते म्रियमाणे या त्वयि जीवति जीवति ।
तां यदीच्छसि जीवन्तीं रक्षात्मानं ममासुभिः ॥

अयमभ्युपायस्तदर्पय त्वरितं वध्यचिह्नम् । यावदनेनात्मानं प्रच्छाद्य वध्यशिलामारोहामि । त्वमपि जननीं पुरस्कृत्यास्मात्प्रदेशान्निवर्तस्व । कदाचिदियं घातस्थानं विलोक्य जीवितं जह्यात् ।

शङ्खचूडः—त्वमेव गच्छ । किमनेन सामोपन्यासेन । आसन्नः खलु गरुडागमनसमयः । ( मातुरग्रतो जानुभ्यां स्थित्वा शिरोनिहिताञ्जलिः ) अम्ब त्वमपि निवर्तस्वेदानीम् ।

समुत्पत्स्यामहे मातर्यस्यां यस्यां गतौ वयम् ।
तस्यां तस्यां प्रियसुते माता भूयास्त्वमेव नः ॥

(पादयोः पतति)

वृद्धा—(सास्रमात्मगतम्)

हा कथमपश्चिममस्य वचनम् । (प्रकाशम्) पुत्रक न खलु त्वामुज्झित्वा मे पादावन्यतो वहतः । तदिहैव त्वया सह मरिष्यामि ।

शङ्खचूडः—(उत्थाय) यावदहमभ्यदूरे भगवन्तं दक्षिणगोकर्णं प्रदक्षिणीकृत्य स्वाम्यादेशमनुतिष्ठामि । (उभौ निष्क्रान्तौ)

नायकः—कष्टं न संपन्नं मेऽभिलषितम् । तत्को नामाभ्युपायः ।

कञ्चुकी—(प्रविश्य) इदं वासोयुगलम् ।

नायकः—(दृष्ट्वा सहर्षमात्मगतम्) दिष्टया सिद्धमभिवाञ्छितमनेनातर्कितोपनतेन रक्तांशुकयुगलेन ।

कञ्चुकी—देव्या मित्रावसुजनन्या कुमाराय प्रेषितम् । तदेतत्परिधत्तां कुमारः ।

नायकः—कञ्चुकिन् उपनय (कञ्चुकी उपनयति) (गृहीत्वात्मगतम्) सफलीभूतो मे मलयवत्याः पाणिग्रहः । (परिधाय प्रकाशम्) कञ्चुकिन् गम्यताम् । मद्वचनादभिवादनीया देवी ।

कञ्चुकी—यदाज्ञापयति कुमारः । (इति निष्क्रान्तः)

नायकः—वासोयुगमिदं रक्तं प्राप्तकाले समागतम् ।
महतीं प्रीतिमाधत्ते परार्थे देहमुज्झतः ॥

(दिशोऽवलोक्य) प्रचण्डो नभस्वान् । आसन्नीभूतः खलु पक्षिराजः । तद्यावदसौ नागच्छति शङ्खचूडस्तावत् त्वरिततर-

मिमां वध्यशिलामारोहामि । (तथाकृत्वोपविश्य स्पर्शं नाटयन्) अहो स्पर्शोऽस्याः ।

शयितेन मातुरङ्के विश्रब्धं शैशवेन यत्प्राप्तम् ।
लब्धं सुखं मयास्या वध्यशिलायास्तदुत्सङ्गे ॥

अयमागतो गरुत्मान् यावदात्मानमाच्छादयामि ।

(तथा करोति । ततः प्रविशति गरुड़ः) अभिपत्य च नायकं गृह्णाति । नेपथ्यात्पुष्पाणि पतन्ति । दुन्दुभिध्वनिश्च ।)

गरुडः—(ऊर्ध्वं दृष्ट्वाकर्ण्य च) अये पुष्पवृष्टिर्दुन्दुभिध्वनिश्च ।

( विहस्य )

आमोदानन्दितालिर्निपतति किमियं पुष्पवृष्टिर्नभस्तः
स्वर्गे किं वैष चक्र मुखरयति दिशां दुन्दुभीनां निनादः ।
आं ज्ञातं सोऽपि मन्ये मम जवमरुता कम्पितः पारिजातो
मन्द्रं संवर्तकाभ्रैरिदमपि रसितं जातसंहारशङ्कैः ॥

नायकः—( आत्मगतम् ) दिष्ट्या कृतार्थोऽस्मि ।

गरुडः—(नायकं कवलयन् ) यावदहं मलयशिखरमारुह्य यथेष्टमाहारयामि । (नायकं गृहीत्वा निष्क्रान्तः)

( ततः प्रविशति रक्तवस्त्रसंवीतः शंखचूडः )

शंखचूडः—( सास्रम् ) कष्टं भोः कष्टम् ।

गोकर्णमर्णवतटे त्वरितं प्रणम्य
प्राप्तोऽस्मि तामिह भुजङ्गमवध्यभूमिम् ।
आदाय तं नखमुखक्षतवक्षसं च
विधाधरं गगनमुत्पतितो गरुत्मान् ॥

हा परमकारुणिक हा निष्कारणैकबान्धव हा परदुःखदुःखित हा परोपकारतृणीकृतदत्तदेह क नु खलु गतोऽसि ।

प्रयच्छ मे प्रतिवचनम् । हा हा हतोऽस्मि मन्दभाग्यः । हा शङ्खचूडहतक किं कृतं त्वया,

नाहित्राणात्कीर्तिरेका मयाप्ता
नापि श्लाघ्या स्वामिनोऽनुष्ठिताज्ञा ।
दत्त्वात्मानं रक्षितोऽन्येन शोच्यो
हा धिक् कष्टं वञ्चितो वञ्चितोऽस्मि ॥

तन्नाहमेवंविधः क्षणमपि जीवन्नुपहास्यमात्मानं करोमि । तद्यावदेनमनुगन्तुं प्रयतिष्ये ।

( ततः प्रविशत्यासनस्थः पुरःपतितनायको गरुडः )

गरुडः—(आत्मगतम्) जन्मनः प्रभृति भुजङ्गपतीनश्नता नेदमीदृशमत्याश्चर्यं मया दृष्टपूर्वं यदयं महासत्वो न केवलं न व्यथते प्रत्युत प्रहृष्ट इव किमपि दृश्यते । तत्कुतूहलमेव जनितमस्यानया धैर्यवृत्त्या ।

भवतु न भक्षयाम्येवैनम् । पृच्छामि तावत्कोऽयमिति ॥

( अपसर्पति )

नायकः—( मांसोत्कर्तनविमुखमुपलक्ष्य )

शिरामुखैः स्यन्दत एव रक्त-
मद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि तवापि तावत्
किं भक्षणात्त्वं विरतो गरुत्मन् ॥

गरुडः—( आत्मगतम् ) आश्चर्यमाश्चर्यम् । कथमयमस्यामप्यवस्थायामेवमूर्जितमभिधत्ते । ( प्रकाशम् ) अहो महासत्त्व ! आवर्जितं मया चञ्च्वा हृदयात्तव शोणितम् ।
धैर्येणानेन च हृतं त्वया हृदयमेव मे ॥

अतः कस्त्वमिति श्रोतुमिच्छामि ।

शङ्खचूडः ( सहसोपसृत्य )—ताक्ष्यं न खलु न खलु साहसमनुष्ठेयम् । नायं नागः । परित्यजैनम् ।
मां भक्षय । अहं तवाहारार्थं प्रेषितोऽस्मि वासुकिना ।
( इत्युरो ददाति )

गरुडः—( शङ्खचूडस्य फणाः पश्यन्नायकञ्च वीक्षमाणः ) कः खल्वयं मया व्यापादितः ।

शङ्खचूडः—विद्याधरवंशतिलको जीमूतवाहनः ।

गरुडः—अये अयमसौ विद्याधरकुमारो जीमूतवाहनः ।

---

## ९—विदुलाया ऊर्जस्वला वाक्

यशस्विनी मन्युमती कुले जाता विभावरी ।
क्षत्रधर्मरता दान्ता विदुला दीर्घदर्शिनी ॥१॥
विदुला नाम राजन्या जगर्हे पुत्रमौरसम् ।
निर्जितं सिन्धुराजेन शयानं दीनचेतसम् ॥२॥

विदुलोवाच

अनन्दन मजा जात द्विषतां हर्षवर्धन ।
न मया त्वं न पित्रा च जातः क्वाभ्यागतो ह्यसि ॥३॥
निर्मन्युश्चाप्यसंख्येयः पुरुषः क्लीबसाधनः ।
यावज्जीवं निराशोऽसि कल्याणाय धुरं वह ॥४॥
मा ऽऽत्मानमवमन्यस्व मैनमल्पेन बीभरः ।
मनः कृत्वा सुकल्याणं मा भैस्त्वं प्रतिसंहर ॥५॥

उत्तिष्ठ हे कापुरुष मा शेष्वैवं पराजितः ।
अमित्रान्नन्दयन् सर्वान् निर्मानो बन्धुशोकदः ॥६॥
सुपूरा वै कुनदिका सुपूरो मूषकाञ्जलिः ।
सुसंतोषः कापुरुषः स्वल्पकेनैव तुष्यति ॥७॥
अप्यहेरारुजन्दंष्ट्रामाश्वेव निधनं व्रज ।
अपि वा संशयं प्राप्य जीवितेऽपि पराक्रमेः ॥८॥
त्वमेवं प्रेतवच्छेषे कस्माद् वज्रहतो यथा ।
उत्तिष्ठ हे कापुरुष मा स्वाप्सीः शत्रुनिर्जितः ॥९॥
माऽस्तं गमस्त्वं कृपणो विश्रूयस्व स्वकर्मणा ।
मा मध्ये मा जघन्ये त्वं माधो भूस्तिष्ठ गर्जितः ॥१०॥
अलातं तिन्दुकस्येव मुहूर्तमपि हि ज्वल ।
मा तुषाग्निरिवानर्चिर्धूमायस्व जिजीविषुः ॥
मुहूर्तं ज्वलितं श्रेयो न च धूमायितं चिरम् ॥११॥
उद्भावयस्व वीर्यं वा तां वा गच्छ ध्रुवां गतिम् ।
धर्मं पुत्राग्रतः कृत्वा किं निमित्तं हि जीवसि ॥१२॥
विपरिच्छिन्नमूलोऽपि न विषीदेत्कथंचन ।
उद्यम्य धुरमुत्कर्षेदाजानेयकृतं स्मरन् ॥१३॥
कुरु सत्त्वं च मानं च विद्धि पौरुषमात्मनः ।
उद्भावय कुलं मग्नं त्वत्कृते स्वयमेव हि ॥१४॥
यस्य वृत्तं न जल्पन्ति मानवा महदद्भुतम् ।
राशिवर्धनमात्रं स नैव स्त्री न पुनः पुमान् ॥१५॥
दाने तपसि शौर्ये च यस्य नोच्चरितं यशः ।
विद्यायामर्थलाभे वा मातुरुच्चार एव सः ॥१६॥
श्रुतेन तपसा वाऽपि श्रिया वा विक्रमेण वा ।

जनान् योऽभिभवत्यन्यान् कर्मणा हि स वै पुमान् ॥१७॥
निरमर्षं निरुत्साहं निर्वीर्यमरिनन्दनम् ।
मास्म सीमन्तिनी काचिज्जनयेत् पुत्रमीदृशम् ॥१८॥
मा धूमाय ज्वलात्यन्तमाक्रम्य जहि शात्रवान् ।
ज्वल मूर्धन्यमित्राणां मुहूर्तमपि वा क्षणम् ॥१९॥
एतावानेव पुरुषो यदमर्षी यदक्षमी ।
क्षमावान्निरमर्षश्च नैव स्त्री न पुनः पुमान् ॥२०॥
सन्तोषो वै श्रियं हन्ति तथानुक्रोश एव च ।
अनुत्थानभये चोभे निरीहो नाश्नुते महत् ॥२१॥
आयसं हृदयं कृत्वा मृगयस्व पुनः स्वकम् ।
परं विषहते यस्मात्तस्मात् पुरुष उच्यते ॥२२॥
तमाहुर्व्यर्थनामानं स्त्रीवद् य इह जीवति ।
शूरस्योर्जितसत्वस्य सिंहविक्रान्तचारिणः ।
दिष्टभावं गतस्यापि विषये मोदते प्रजा ॥२३॥
भृत्यैर्विहीयमानानां परपिण्डोपजीविनाम् ।
कृपणानामसत्वानां मा वृत्तिमनुवर्तिथाः ॥२४॥
यस्य शूरस्य विक्रान्तैरेधन्ते बान्धवाः सुखम् ।
त्रिदशा इव शक्रस्य साधु तस्येह जीवितम् ॥२५॥
स्वबाहुबलमाश्रित्य यो हि जीवति मानवः ।
स लोके लभते कीर्तिं परत्र च शुभां गतिम् ॥२६॥
पुत्र नात्मावमन्तव्यः पूर्वाभिरसमृद्धिभिः ।
अभूत्वा हि भवन्त्यर्था भूत्वा नश्यन्ति चापरे ॥२७॥
उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु ।
भविष्यतीत्येव मनः कृत्वा सततमव्यथैः ॥२८॥

---

## १०—सिद्धार्थस्य निर्वेदनिमित्तानि

ततः कुमारो जरयाभिभूतं
दृष्ट्वा नरेभ्यः पृथगाकृतिं तम् ।
उवाच संग्राहकमागतास्थ-
स्तत्रैव निष्कम्पनिविष्टदृष्टिः ॥ १ ॥

क एष भोः सूत नरोऽभ्युपेतः
केशैः सितैर्यष्टिविषक्तहस्तः ।
भ्रूसंवृताक्षः शिथिलानताङ्गः
किं विक्रियैषा प्रकृतिर्यदृच्छा ॥ २ ॥

इत्येवमुक्तः स रथप्रणेता
निवेदयामास नृपात्मजाय ।
संरक्ष्यमप्यर्थमदोषदर्शी
तैरेव देवैः कृतबुद्धिमोहः ॥ ३ ॥

रूपस्य हन्त्री व्यसनं बलस्य
शोकस्य योनिर्निधनं रतीनाम् ।
नाशः स्मृतीनां रिपुरिन्द्रियाणा-
मेषा जरा नाम ययैष भग्नः ॥ ४ ॥

पीतं ह्यनेनापि पयः शिशुत्वे
कालेन भूयः परिमृष्टमुर्व्याम् ।
क्रमेण भूत्वा च युवा वपुष्मान्
क्रमेण तेनैव जरामुपेतः ॥ ५ ॥

इत्येवमुक्ते चलितः स किंचि-
द्राजात्मजः सूतमिदं बभाषे ।
किमेष दोषो भविता ममापी—
त्यस्मै ततः सारथिरभ्युवाच ॥ ६ ॥

आयुष्मतोऽप्येष वयःप्रकर्षो—
न्निःसंशयं कालवशेन भावी ।
एवं जरां रूपविनाशयित्रीं
जानाति चैवेच्छति चैष लोकः ॥ ७ ॥

ततः स पूर्वाशयशुद्धबुद्धि—
र्विस्तीर्णकल्पाचितपुण्यकर्मा ।
श्रुत्वा जरां संविविजे महात्मा
महाशनेर्घोषमिवान्तिके गौः ॥ ८ ॥

निःश्वस्य दीर्घं स शिरः प्रकम्प्य
तस्मिंश्च जीर्णे विनिवेश्य चक्षुः ।
तां चैव दृष्ट्वा जनतां सहर्षां
वाक्यं स संविग्नमिदं जगाद ॥ ९ ॥

एवं जरा हन्ति च निर्विशेषं
स्मृतिं च रूपं च पराक्रमं च ।
न चैव संवेगमुपैति लोकः
प्रत्यक्षतोऽपीदृशमीक्षमाणः ॥ १० ॥

एवं गते सूत निवर्तयाश्वान्
शीघ्रं गृहाण्येव भवान्प्रयातु ।
उद्यानभूमौ हि कुतो रतिर्मे
जराभये चेतसि विद्यमाने ॥ ११ ॥

अथाज्ञया भर्तृसुतस्य तस्य
निवर्तयामास रथं नियन्ता ।
ततः कुमारो भवनं तदेव
चिन्तावशः शून्यमिव प्रपेदे ॥ १२ ॥
यदा तु तत्रापि न शर्म लेभे
जरा जरेति प्रपरीक्षमाणः ।
ततो नरेन्द्रानुमतः स भूयः
क्रमेण तेनैव बहिर्जगाम ॥ १३ ॥
अथापरं व्याधिपरीतदेहं
त एव देवाः ससृजुर्मनुष्यम् ।
दृष्ट्वा च तं सारथिमाबभाषे
शौद्धोदनिस्तद्गतदृष्टिरेव ॥ १४ ॥
स्थूलोदरः श्वासचलच्छरीरः
स्रस्तांसबाहुः कृशपाण्डुगात्रः ।
अंबेतिवाचं करुणां ब्रुवाणः
परं समाश्लिष्य नरः क एषः ॥ १५ ॥
ततोऽब्रवीत्सारथिरस्य सौम्य
धातुप्रकोपप्रभवः प्रवृद्धः ।
रोगाभिधानः सुमहाननर्थः
शक्रोऽपि येनैष कृतोऽस्वतन्त्रः ॥ १६ ॥
इत्यूचिवान् राजसुतः स भूय—
स्तं सानुकम्पो नरमीक्षमाणः ।
अस्यैव जातः पृथगेष दोषः,
सामान्यतो रोगभयं प्रजानाम् ॥ १७ ॥

ततो बभाषे स रथप्रणेता
कुमार साधारण एष दोषः ।
एवं हि रोगैः परिपीड्यमानो
रुजान्तरे हर्षमुपैति लोकः ॥ १८ ॥
इति श्रुतार्थः स विषण्णचेताः
प्रावेपताम्बूर्मिगतः शशीव ।
इदं च वाक्यं करुणायमानः
प्रोवाच किंचिन्मृदुना स्वरेण ॥ १९ ॥
इदं च रोगव्यसनं प्रजानां
पश्यंश्च विश्रम्भमुपैति लोकः ।
विस्तीर्णमज्ञानमहो नराणां
हसन्ति ये रोगभयैरमुक्ताः ॥ २० ॥
निवर्त्यतां सूत बहिः प्रयाणा-
न्नरेन्द्रसद्मैव रथः प्रयातु ।
श्रुत्वा च मे रोगभयं, रतिभ्यः
प्रत्याहतं संकुचतीव चेतः ॥ २१ ॥
ततो निवृत्तः स निवृत्तहर्षः
प्रध्यानयुक्तः प्रविवेश सद्म ।
तं द्विस्तथा प्रेक्ष्य च संनिवृत्तं
पुर्यागमं भूमिपतिश्चकार ॥ २२ ॥
श्रुत्वा निमित्तं तु निवर्तनस्य
संत्यक्तमात्मानमनेन मेने ।
मार्गस्य शौचाधिकृताय चैव
चुक्रोश रुष्टोऽपि च नोग्रदण्डः ॥२३॥

भूयश्च तस्मै विदधे सुताय
विशेषयुक्तं विषयप्रकारम् ।
चलेन्द्रियत्वादपि नाम सक्तो
नास्मान्विजह्यादिति नाथमानः ॥२४॥

यदा च शब्दादिभिरिन्द्रियार्थै-
रंतःपुरे नैव सुतोऽस्य रेमे ।
ततो बहिर्व्यादिशति स्म यात्रां
रसान्तरं स्यादिति मन्यमानः ॥२५॥

स्नेहाच्च भावं तनयस्य बुद्ध्वा
संवेगदोषानविचिन्त्य कांश्चित् ।
योग्यः समाज्ञापयति स्म तत्र
कलास्वभिज्ञा बहुवारमुख्याः ॥२६॥

ततो विशेषेण नरेन्द्रमार्गे
स्वलंकृते चैव परीक्षिते च ।
व्यत्यास्य सूतं च रथं च राजा
प्रस्थापयामास बहिः कुमारम् ॥२७॥

ततस्तथा गच्छति राजपुत्रे
तैरेव देवैर्विहितो गतासुः ।
तं चैव मार्गे मृतमुह्यमानं
सूतः कुमारश्च ददर्श नान्यः ॥२८॥

अथाब्रवीद्राजसुतः स सूतं
नरैश्चतुर्भिर्ह्रियते क एषः ।
दीनैर्मनुष्यैरनुगम्यमानो
यो भूषितश्चाप्यवरुद्यते च ॥२९॥

ततः स शुद्धात्मभिरेव देवैः
शुद्धाधिवासैरभिभूतचेताः ।
अवाच्यमप्यर्थमिमं नियंता
प्रव्याजहारार्थविदीश्वराय ॥३०॥

बुद्धीन्द्रियप्राणगुणैर्वियुक्तः
सुप्तो विसंज्ञस्तृणकाष्ठभूतः ।
संबद्धय संरक्ष्य च यत्नवद्भिः
प्रियाप्रियैस्त्यज्यत एष कोऽपि ॥३१॥

इति प्रणेतुः स निशम्य वाक्यं
संचुक्षुभे किंचिदुवाच चैनम् ।
किं केवलस्यैव जनस्य धर्मः
सर्वप्रजानामयमीदृशोऽन्तः ॥३२॥

ततः प्रणेता वदति स्म तस्मै
सर्वप्रजानामयमन्तकर्त्ता ।
हीनस्य मध्यस्य महात्मनो वा
सर्वस्य लोके नियतो विनाशः ॥३३॥

ततः स धीरोऽपि नरेन्द्रसूनुः
श्रुत्वैव मृत्युं विषसाद सद्यः ।
अंसेन संश्लिष्य च कूबराग्रं
प्रोवाच निर्ह्रादवता स्वरेण ॥३४॥

इयं च निष्ठा नियतं प्रजानां
प्रमाद्यति त्यक्तभयश्च लोकः ।
मनांसि शङ्के कठिनानि नृणां
स्वस्थास्तथा ह्यध्वनि वर्तमानाः ॥३५॥

तस्माद्रथः सूत निवर्त्यतां नो
विहारभूमौ न निवेशकालः ।
जानन्विनाशं कथमार्तिकाले
सचेतनः स्यादिह हि प्रमत्तः ॥३६॥

---

## ११—कृत्रिमकलहः ।

राजा—( स्वगतम् ) राज्यं हि नाम राजधर्मानुवृत्तिपरस्य नृपतेर्महदप्रीतिस्थानम् । कुतः—

परार्थानुष्ठाने रहयति नृपं स्वार्थपरता
परित्यक्तस्वार्थो नियतमयथार्थः क्षितिपतिः ।
परार्थश्चेत् स्वार्थादभिमततरो हन्त परवान्
परायत्तः प्रीतेः कथमिव रसं वेत्तु पुरुषः ॥

अपि च दुराराध्या हि राजलक्ष्मीरात्मवद्भिरपि राजभिः । कुतः—

तीक्ष्णादुद्विजते मृदौ परिभवत्रासान्न संतिष्ठते
मूर्खं द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि ।
शूरेभ्योऽप्यधिकं बिभेत्युपहसत्येकान्तभीरूनहो
श्रीर्लब्धप्रसरेव वेशवनिता दुःखोपचर्या भृशम् ॥

अन्यच्च, कृतककलहं कृत्वा स्वतन्त्रेण किंचित्कालान्तरं व्यवहर्त्तव्यमित्यार्यादेशः । स च कथमपि मया पातकमिवाभ्युपगतः । अथवा शश्वदार्योपदेशसंस्क्रियमाणमतयः सदैव स्वतन्त्रा वयम् । कुतः—

इह विरचयन् साध्वीं शिष्यः क्रियां न निवार्यते
त्यजति तु यदा मार्गं मोहात्तदा गुरुरङ्कुशः ।
विनयरुचयस्तस्मात् सन्तः सदैव निरङ्कुशाः
परतरमतः स्वातन्त्र्येभ्यो वयं हि पराङ्मुखाः ॥

( प्रकाशम् ) आर्य वैहीनरे ! सुगाङ्गमार्गमादेशय ।

कञ्चुकी—इत इतो देवः । ( परिक्रम्य ) अयं सुगाङ्गप्रासादः । शनैरारोहतु देवः ।

राजा—( आरुह्य दिशोऽवलोक्य ) अहो शरत्संभृतशोभानां दिशामतिरमणीयता । अये ! कथमप्रवृत्तकौमुदीमहोत्सवं कुसुमपुरम् । आर्य वैहीनरे ! अथास्मद्वचनादाघोषितः कुसुमपुरे कौमुदीमहोत्सवः ?

कञ्चुकी—अथ किम् ।

राजा—तत्किं न गृहीतम् अस्मद्वचनं पौरैः ?

कञ्चुकी—(कर्णौ पिधाय) शान्तं पापं शान्तं पापम् । पृथिव्याम् अस्खलितपूर्वं देवस्य शासनं कथं पौरेषु स्खलिष्यति ।

राजा—तत्कथमप्रवृत्तकौमुदीमहोत्सवमद्यापि कुसुमपुरम् ?

कञ्चुकी—एवमेवैतत् ।

राजा—किमेतत् ?

कञ्चुकी—देव इदम् ।

राजा—स्फुटं कथय ।

कञ्चुकी—प्रतिषिद्धः कौमुदीमहोत्सवः ।

राजा—( सक्रोधम् ) आः केन ?

कञ्चुकी—देव ! नातःपरं विज्ञापयितुं शक्यम् ।

राजा—न खलु आर्यचाणक्येनापहृतः प्रेक्षकाणामतिशयरमणीय-
श्चक्षुषो विषयः ।

कञ्चुकी—देव कोऽन्यो जीवितकामो देवस्य शासनमतिवर्त्तेत ।

राजा—शोणोत्तरे उपवेष्टुमिच्छामि ।

प्रतिहारी—देव एतत् सिंहासनम् ।

राजा—(उपविश्य) आर्य वैहीनरे आर्यचाणक्यं द्रष्टुमिच्छामि

कञ्चुकी—यदाज्ञापयति देवः ( इति निष्क्रान्तः ) ।

( ततः प्रविशति आसनस्थः स्वभवनगतः कोपानुविद्धां चिन्तां
नाटयन् चाणक्यः ) ।

चाणक्यः—कथं स्पर्धते मया सह दुरात्मा राक्षसः !

कृतागाः कौटिल्यो भुजग इव निर्याय नगरा–
द्यथा नन्दान् हत्वा नृपतिमकरोन्मौर्यवृषलम् ।
तथाहं मौर्येन्दोः श्रियमपहरामीति कृतधीः
प्रकर्षं मद्बुद्धेरतिशयितुमेष व्यवसितः ॥

( आकाशे लक्ष्यं बद्ध्वा ) राक्षस ! राक्षस ! विरम्यताम-
स्माद्दुर्व्यसनात् ।

उत्सिक्तः कुसचिवदृष्टराज्यभारो
नन्दोऽसौ न भवति चन्द्रगुप्त एषः ।
चाणक्यस्त्वमपि च नैव, केवलं ते
साधर्म्यं मदनुकृतौ प्रधानवैरम् ॥

( विचिन्त्य ) अथवा नातिमात्रमत्र वस्तुनि मया मनः खेद-
यितव्यम् । स्थाने कृतप्रतीकारस्य मे सर्वमेवानुकूलं
भविष्यति ।

कञ्चुकी—(अवलोक्य) इदमाचार्यचाणक्यगृहम् । यावत् प्रवि-

शामि । ( प्रविश्य ) अहो राजाधिराजमन्त्रिणो विभूतिः । तथाहि—

उपलशकलमेतद्भेदकं गोमयानां
बटुभिरुपहृतानां बर्हिषां स्तूपमेतत् ।
शरणमपि समिद्भिः शुष्यमाणाभिराभि-
र्विनमितपटलान्तं दृश्यते जीर्णकुड्यम् ।

( विलोक्य सभयम् ) अये ! तदयमार्यचाणक्यस्तिष्ठति ।

यो नन्दमौर्यनृपयोः परिभूय लोक—
मस्तोदयावदिशदप्रतिभिन्नकालम् ।
पर्यायपातितहिमोष्णमसर्वगामि
धाम्नाऽतिशाययति धाम सहस्रधाम्नः ॥

( जानुभ्यां भूमौ निपत्य ) जयत्वार्यः ।

चाणक्यः—वैहीनरे ! किमागमनप्रयोजनम् ।

कञ्चुकी—आर्य ! बहुलभूमिपालमौलिमालामाणिक्यशकलशिखा-पिशङ्गीकृतपादयुगलः सुगृहीतनामधेयो देवश्चन्द्रगुप्त आर्यं शिरसा प्रणम्य विज्ञापयति अकृतक्रियान्तरायमार्यं द्रष्टु-मिच्छामि ।

चाणक्यः—वृषलो मां द्रष्टुमिच्छति । वैहीनरे ! न खलु वृषल-श्रवणपथं गतोऽयं मत्कृतः कौमुदीमहोत्सवप्रतिषेधः ।

कञ्चुकी—आर्य अथ किम् ।

चाणक्यः—( सक्रोधम् ) आः केन कथितम् ?

कञ्चुकी—( सभयम् ) प्रसीदत्वार्यः । स्वयमेव सुगाङ्गप्रासाद-गतेन देवेनावलोकितमप्रवृत्तकौमुदीमहोत्सवं पुरम् ।

चाणक्यः—आः ज्ञातम् ! ततो भवद्भिरन्तरा प्रोत्साह्य कोपितो वृषलः । किमन्यत् ।

( कञ्चुकी भयं नाटयंस्तूष्णीमधोमुखस्तिष्ठति )

चाणक्यः—अहो राजपरिजनस्य चाणक्योपरि प्रद्वेषपक्षपातः । अथ क्व वृषलः ?

कञ्चुकी—( भयं नाटयन् ) आर्य ! सुगाङ्गगतेन देवेनाहमार्यपादमूलं प्रेषितः ।

चाणक्यः—( उत्थाय ) सुगाङ्गमार्गमादेशय ।

कञ्चुकी—इत इत आर्यः ।

( उभौ परिक्रामतः )

कञ्चुकी—एष सुगाङ्गप्रासादः । शनैरारोहत्वार्यः ।

चाणक्यः—( आरुह्यावलोक्य च ) अये ! सिंहासनमध्यास्ते वृषलः । साधु साधु

नन्दैर्वियुक्तमनपेक्षितराजराजै-
रध्यासितं च वृषलेन वृषेण राज्ञाम् ।
सिंहासनं सदृशपार्थिवसंगतं च
प्रीतिं परां प्रगुणयन्ति गुणा ममैते ॥

( उपसृत्य ) विजयतां वृषलः ।

राजा—आर्य चन्द्रगुप्तः प्रणमति ।

( इति पादयोः पतति । )

चाणक्यः—( पाणौ गृहीत्वा ) उत्तिष्ठोत्तिष्ठ वत्स ।

( आ शैलेन्द्राच्छिलान्तस्खलितसुरनदीशीकरासारशीता—
तीरान्तान्नैकरागस्फुरितमणिरुचो दक्षिणस्यार्णवस्य ।

आगत्यागत्य भीतिप्रणतनृपशतैः शश्वदेव क्रियन्तां
चूडारत्नांशुगर्भास्तव चरणयुगस्याङ्गुलीरन्ध्रभागाः ॥ )

राजा—आर्यप्रसादादनुभूयत एव सर्वम् । तदुपविशत्वार्यः ।

( उभौ यथोचितमुपविष्टौ )

चाणक्यः—वृषल ! किमर्थं वयमाहूताः ?

राजा—आर्यस्य दर्शनेनात्मानमनुग्राहयितुम् ।

चाणक्यः ( सस्मितम् ) अलमनेन प्रश्रयेण । न निष्प्रयोजनमधिकारवन्तः प्रभुभिराहूयन्ते ।

राजा—आर्य ! कौमुदीमहोत्सवप्रतिषेधस्य किं फलमार्यः पश्यति ।

चाणक्यः—उपालब्धुं तर्हि वयमाहूताः ।

राजा—शान्तं पापं शान्तं पापम् । नहि नहि विज्ञापयितुम् ।

चाणक्यः—यद्येवं तर्हि विज्ञापनीयानामवश्यं शिष्येण स्वैररुचयो न निरोद्धव्याः ।

राजा—एवमेतत् ! कः सन्देहः ! किन्तु न कदाचिदार्यस्य निष्प्रयोजना प्रवृत्तिरित्यस्ति नः प्रश्नावकाशः ।

चाणक्यः—वृषल सम्यग् गृहीतवानसि, न प्रयोजनमन्तरा चाणक्यः स्वप्नेऽपि चेष्टते ।

राजा—आर्य अतएव शुश्रूषा मां मुखरयति ।

चाणक्यः—वृषल श्रूयताम् । इह खल्वर्थशास्त्रकारास्त्रिविधां सिद्धिमुपवर्णयन्ति—राजायत्तां सचिवायत्तामुभयायत्तां चेति । ततः सचिवायत्तासिद्धेस्तव किं प्रयोजनान्वेषणेन । यतो वयमेवात्र नियुक्ता वेत्स्यामः ।

( राजा सकोपं मुखं परावर्तयति )

( नेपथ्ये वैतालिकः पठति )

सत्त्वोत्कर्षस्य धात्रा निधय इव कृताः केऽपि कस्यापि हेतो-
र्जेतारः स्वेन धाम्ना मदसलिलमुचां नागयूथेश्वराणाम् ।
दंष्ट्राभङ्गं मृगाणामधिपतय इव व्यक्तमानावलेपा
नाज्ञाभङ्गं सहन्ते नृवर नृपतयस्त्वादृशाः सार्वभौमाः ।

अपि च—

भूषणाद्युपभोगेन प्रभुर्भवति न प्रभुः ।
परैरपरिभूताज्ञस्त्वमिव प्रभुरुच्यते ॥

चाणक्यः—( स्वगतम् ) अये कोऽयमीदृशैर्वचनैः संधुक्षयति वृषलम् ! ( विचिन्त्य ) आः ज्ञातम् । राक्षसस्यायं प्रयोगः । दुरात्मन् राक्षस ! दृश्यसे भोः, जागर्ति खलु कौटिल्यः ।

राजा—आर्य वैहीनरे वैतालिकाय सुवर्णशतसहस्रं दापय ।

कञ्चुकी—यदाज्ञापयति देवः ( इत्युत्थाय परिक्रामति )

चाणक्यः—वैहीनरे ! तिष्ठ न गन्तव्यम् । वृषल किमयमस्थाने महान् अर्थोत्सर्गः ।

राजा—( सकोपम् ) आर्येणैवं सर्वत्र निरुद्धचेष्टाप्रसरस्य मे बन्धनमिव राज्यं न राज्यमिव ।

चाणक्यः—वृषल स्वयमनभियुक्तानां राज्ञामेते दोषाः संभवन्ति । तद्यदि न सहसे ततः स्वयमभियुज्यस्व ।

राजा—एते स्वकर्मण्यभियुज्यामहे ।

चाणक्यः—प्रियं नः ! वयमपि स्वकर्मण्यभियुज्यामहे ।

राजा—यद्येवं तर्हि कौमुदीमहोत्सवप्रतिषेधस्य तावत् प्रयोजनं श्रोतुमिच्छामि ।

चाणक्यः—वृषल कौमुदीमहोत्सवानुष्ठानस्य किं प्रयोजनमित्यहमपि श्रोतुमिच्छामि ।

राजा—प्रथमं तावन्ममाज्ञाऽव्याघातः ।

चाणक्यः—वृषल ममापि तवाज्ञाव्याघात एव कौमुदीमहोत्सवप्रतिषेधस्य प्रथमं प्रयोजनम् । अपि च श्रूयताम् । एष राक्षसोपदेशप्रवणो महीयसा म्लेच्छबलेन परिवृतः पितृवधामर्षी पर्वतकपुत्रो मलयकेतुरस्मानभियोक्तुमुद्यतः । सोऽयं व्यायामकालो नोत्सवकाल इति दुर्गसंस्कारे प्रारब्धव्ये किं कौमुदीमहोत्सवेनेति प्रतिषिद्धः ।

राजा—आर्य ! राक्षसस्तर्हि विक्रम्य कथं न गृहीतः ।

चाणक्यः—राक्षसः खल्वसौ । विक्रम्य गृह्यमाणो युष्मद्बलानि बहूनि नाशयेत् स्वयं वा विनश्येत् । एवं सत्युभयथापि दोषः ।

पश्य—स हि भृशमभियुक्तो यद्युपेयाद् विनाशं
ननु वृषल वियुक्तस्तादृशेनासि पुंसा ।
अथ तव बलमुख्यान् घातयेत् सापि पीडा
वनगज इव तस्मात् सोऽभ्युपायैर्विनेयः ॥

राजा—न शक्नुमो वयमार्यस्य मतिमतिशयितुम् । सर्वथा अमात्यराक्षस एवात्र प्रशस्यतरः ।

चाणक्यः—( सक्रोधम् ) न भवानिति वाक्यशेषः । भो वृषल ! किं कृतं तेन ?

राजा—श्रूयताम् । येन खलु महात्मना

लब्धायां पुरि यावदिच्छमुषितं कृत्वा पदं नो गले
व्याघातो जयघोषणादिषु बलादस्मद्बलानां कृतः ।
अत्यर्थं विपुलैः स्वनीतिविभवैः संमोहमापादिता
विश्वास्येष्वपि विश्वसन्ति मतयो न स्वेषु वर्गेषु नः ।

चाणक्यः---( विहस्य ) एतत्कृतं राक्षसेन। वृषल मया पुनर्ज्ञातं नन्दमिव भवन्तमुद्धृत्य भवानिव भूतले मलयकेतू राजाधिराजपदे नियोजित इति।

राजा---अन्येनैवेदमनुष्ठितं किमत्रार्यस्य ?

चाणक्य---आः मत्सरिन्! केन ?

राजा---नन्दकुलविद्वेषिणा दैवेन।

चाणक्यः---दैवमविद्वांसः प्रमाणयन्ति।

राजा---विद्वांसोऽप्यविकत्थना भवन्ति।

चाणक्यः---( सकोपम् ) वृषल भृत्यमिव मामारोढुमिच्छसि।

शिखां मोक्तुं बद्धामपि पुनरयं धावति करः

( भूमौ पादं प्रहृत्य )

प्रतिज्ञामारोढुं पुनरपि चलत्येष चरणः।

प्रणाशान्नन्दानां प्रशममुपयातं त्वमधुना

परीतः कालेन ज्वलयसि मम क्रोधदहनम्॥

राजा---( सावेगमात्मगतम् ) अये कथं सत्यमेवार्यः कुपितः। तथाहि--दृष्टिरुद्गिलति ज्वालां भृकुटिर्विकटानना।

रुद्रस्येव पदाघातं कथंचित् क्षमते क्षमा॥

चाणक्यः---( कृतककोपं संहृत्य ) वृषल! वृषल! अलमुत्तरोत्तरेण यद्यस्मत्तो गरीयान् राक्षसोऽवगम्यते तदिदं शस्त्रं तस्मै दीयताम्। ( इति शस्त्रमुत्सृज्योत्थाय चाकाशे लक्ष्यं बद्ध्वा स्वगतम् ) राक्षस! राक्षस! एष भवतः कौटिल्यबुद्धिविजिगीषोर्बुद्धेः प्रकर्षः।

चाणक्यतश्चलितभक्तिमहं सुखेन

जेष्यामि मौर्यमिति संप्रति यः प्रयुक्तः।

भेदः किलैष भवता सकलः स एव
संपत्स्यते शठ तवैव हि दूषणाय ॥

(इति निष्क्रान्तः) ।

राजा––आर्य वैहीनरे अतः प्रभृत्यनादृत्य चाणक्यं चन्द्रगुप्तः स्वयमेव राज्यं करिष्यतीति गृहीतार्थाः क्रियन्तां प्रकृतयः ।

कंचुकी––( आत्मगतम् ) कथं निरुपपदमेव चाणक्यमिति नार्यचाणक्यमिति । हन्त संगृहीतोऽधिकारः । अथवा न खल्वत्र वस्तुनि देवदोषः । कुतः––

स दोषः सचिवस्यैव यदसत्कुरुते नृपः ।
याति यन्तुः प्रमादेन गजो व्यालत्ववाच्यताम् ॥

राजा––आर्य किं विचारयसि ।

कञ्चुकी––देव न किंचित् । दिष्ट्या देव इदानीं देवः संवृत्तः ।

राजा––( आत्मगतम् ) एवमस्मासु गृह्यमाणेषु स्वकार्यसिद्धिकामः सकामो भवत्वार्यः । ( प्रकाशम् ) शोणोत्तरे अनेन शुष्ककलहेन शिरोवेदना मां बाधते । शयनगृहमादेशय ।

प्रतीहारी––एतु एतु देवः ।

राजा––( आत्मगतम् ) ।

आर्याज्ञयैव मम लङ्घितगौरवस्य
बुद्धिः प्रवेष्टुमिव भूविवरं प्रवृत्ता ।
ये सत्यमेव हि गुरूनतिपातयन्ति
तेषां कथं नु हृदयं न भिनत्ति लज्जा ॥

---

# १२—भीमस्य मल्लयुद्धम्

अथ मासे चतुर्थे तु शङ्करस्य महोत्सवः ।
आसीत् समृद्धो मत्स्येषु पुरुषाणां सुसंमतः ॥१॥
तत्र मल्लाः समापेतुर्दिग्भ्यो राजन् सहस्रशः ।
महाकाया महावीर्या कालकेया इवासुराः ॥२॥
वीर्योन्मत्ता बलोदग्रा राज्ञा समभिपूजिताः ।
सिंहस्कन्धकटिग्रीवाः स्ववदाता मनस्विनः ।
असकृल्लब्धलक्षास्ते रङ्गे पार्थिवसन्निधौ ॥३॥
तेषामेको महानासीत् सर्वमल्लानथाह्वयत् ।
व्यावल्गमानो ददृशे गर्जितोद्गतिभिः स्थितः ॥४॥
वित्रस्तमनसः सर्वे मल्लास्ते हतचेतसः ।
अवाङ्मुखाश्च भीताश्च मल्लाश्चान्ये विचेतसः ॥५॥
व्यसुत्वमपरे चैव वाञ्छन्ति प्रतिविह्वलाः ।
गां प्रवेष्टुमथेच्छन्ति खं गन्तुमिव चोत्थिताः ॥६॥
त्रस्ताः श्रान्ता विषण्णाङ्गा निःशब्दं विह्वलेक्षणाः ।
विराटराजमल्लास्ते भग्नदर्पा हतप्रभाः ।
मल्लेन्द्रनिहताः सर्वे न किंचित् प्रवदन्ति ते ॥७॥
मल्ल उद्वीक्ष्य तान् मल्लांस्त्रस्तान् वाक्यमुवाच ह ।
आगतं मल्लराजं मां कृत्स्ने पृथिविमण्डले ।
सिंहव्याघ्रगणैः सार्धं क्रीडन्तं विद्धि भूपते ॥८॥
मल्लेन्द्रस्य वचः श्रुत्वा बलदर्पसमन्वितम् ।
विराटो वीक्ष्य तान् मल्लांस्त्रस्तान् वाक्यमुवाच ह ॥९॥

अनेन सह मल्लेन को योद्धुं शक्तिमान्नरः ।
इत्युक्तास्ते विराटेन सर्वे मल्ला विशांपते ।
तूष्णीमासंस्ततो राजा क्रोधाविष्ट उवाच ह ॥१०॥
ग्रामांश्च वेतनान्येषां मल्लानां हारयाम्यहम् ।
ततो युधिष्ठिरोऽवादीच्छ्रुत्वा मात्स्यपतेर्वचः ॥११॥
अस्ति मल्लो महाराज मया दृष्टो युधिष्ठिरे ।
अनेन सह मल्लेन योद्धुं शक्नोति भूपते ॥१२॥
योऽसौ मल्लो मया दृष्टः पूर्वं यौधिष्ठिरे पुरे ।
सोऽयं मल्लो वसत्येष राजंस्तव महानसे ॥१३॥
युधिष्ठिरवचः श्रुत्वा व्यक्तमाहेति पार्थिवः ।
सोऽप्यथाहूयतां क्षिप्रं योद्धुं मल्लेन संप्रति ॥१४॥
भीमसेनो विराटेन आहूतः प्रेरितस्तथा ।
योद्धुं ततोऽब्रवीद्वाक्यं योद्धुं शक्नोमि भूपते ॥१५॥
नरेन्द्र ते प्रभावेण श्रिया शक्त्या च शासनात् ।
महादेवस्य भक्त्या च तं मल्लं पातयाम्यहम् ॥१६॥
प्रेरितो भीमसेनस्तु मल्लमाहूय मण्डले ।
योद्धुं व्यवस्थितो वीरो रेणुं संमृज्य हस्तयोः ॥१७॥
मत्तो गज इवान्यं तु योद्धुं समुपचक्रमे ।
ततः स पुरुषव्याघ्रः शार्दूलशिथिलं चरन् ॥१८॥
बबन्ध कक्षां कौन्तेयस्ततः संहर्षयन् जनम् ।
ततस्तु वृत्रसंकाशं भीमो मल्लं समाह्वयत् ॥१९॥
जीमूतं नाम तं तत्र मल्लं प्रख्यातविक्रमम् ।
कक्षे मल्लं गृहीत्वाथ ननाद बहु सिंहवत् ॥२०॥

तावुभौ सुमहोत्साहावुभौ भीमपराक्रमौ ।
मत्ताविव महाकायौ वारणौ षष्ठिहायनौ ॥२१॥
वीरौ परमसंहृष्टावन्योन्यजयकांक्षिणौ ।
अन्योन्यस्यान्तरं प्रेप्सू परस्परजयैषिणौ ॥२२॥
ततस्तौ नरशार्दूलौ बाहुयुद्धं समीयतुः ।
प्रकर्षणाकर्षणयोरभ्याकर्षविकर्षणैः ॥२३॥
आकर्षतुरथान्योन्यं जानुभिश्चापि जघ्नतुः ।
तद्युद्धमभवद् घोरमशस्त्रं बाहुतेजसा ॥२४॥
बलप्राणेन शूराणां समाजोत्सवसन्निधौ ।
अरज्यत जनः सर्वः सोत्क्रुष्टनिनदोत्थितः ॥२५॥
ततः शब्देन महता भर्त्सयन्तौ परस्परम् ।
व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ ॥२६॥
बाहुभिः समसज्जेतामायसैः परिघैरिव ।
उत्पपाताथ वेगेन मल्लं कक्षे गृहीतवान् ॥२७॥
पार्श्वे निगृह्य हस्तेन पातयामास मल्लकम् ।
चकर्ष दोर्भ्यामुत्पात्य भीमो मल्लममित्रहा ॥२८॥
समुद्यम्य महाबाहुर्भ्रामयामास वीर्यवान् ।
भ्रामयित्वा शतगुणं गतसत्यमचेतनम् ।
प्रत्यपिंषन्महाबाहुर्मल्लं भुवि वृकोदरः ॥२९॥
तस्मिन् विनिहते वीरे जीमूते लोकविश्रुते ।
विराटः परमं हर्षमगच्छद्बान्धवैः सह ।
प्रहर्षात् प्रददौ वित्तं बहु राजा महामनाः ॥३०॥
एवं स सुबहून्मल्लान् पुरुषांश्च महाबलान् ।
विनिघ्नन् मत्स्यराजस्य प्रीतिमाहरदुत्तमाम् ॥३१॥

यदास्य तुल्यः पुरुषो न कश्चित्तत्र विद्यते ।
ततो व्याघ्रैश्च सिंहैश्च द्विरदैश्चाप्ययोधयत् ॥३२॥

---

## १३—लक्ष्म्या वशीकारप्रकारः

संनिकृष्टाभिषेकं च दर्शनार्थमुपागतम् ।
चन्द्रापीडमथोवाच शुकनासः सविस्तरम् ॥ १ ॥
तात विज्ञातशास्त्रस्य विनयाचारशीलिनः ।
नाल्पमप्युपदेष्टव्यमस्ति स्थिरमतेस्तव ॥ २ ॥
किंतु लोकोत्तरा लक्ष्मीरभिराममिदं वपुः ।
नवं वयः परा शक्तिरिति दुर्विषहो भरः ॥ ३ ॥
लक्ष्मीर्नाम परं पुंसामन्यथाभावकारणम् ।
विरलास्ते विकाराय न येषां तत्परिग्रहः ॥ ४ ॥
पुष्णाति तीव्रमुष्माणं हिनस्ति व्यक्तवादिताम् ।
करोति भक्तविद्वेषमसमः श्रीकृतो ज्वरः ॥ ५ ॥
न पश्यन्ति न शृण्वन्ति नापेक्षन्ते हिताहितम् ।
न विद्मः किन्नु चेष्टन्ते कष्टं श्रीविप्लुता नराः ॥ ६ ॥
क्रमागतेति नैतस्यामाश्वासः कोऽपि विद्यते ।
ह्योऽपि यत्रोषिता लक्ष्मीस्तत्रैवाद्य न दृश्यते ॥ ७ ॥
वातरक्ताभिभूतेव भिन्नपादेव कण्टकैः ।
लक्ष्मीर्निधातुं शक्नोति न क्वचिन्निर्भरं पदम् ॥ ८ ॥
श्रीः सपत्नीमिव द्वेष्टि दृष्टिं सत्पथवर्तिनीम् ।
तां विना यत्र तत्रैव पतन्त्यन्धा इवेश्वराः ॥ ९ ॥

सत्पथस्योपदेष्टारस्तेषां प्रविरला नराः ।
धूर्तैरेव हि मुह्यन्ते हृदयानुप्रवेशिभिः ॥१०॥
आपातरमणीयेषु विषयेषु निरर्गलम् ।
तैरेव हि प्रवर्त्यन्ते सुखमाधुर्यपण्डितैः ॥११॥
धूर्तप्रतारिताश्चैते विषयासक्तचेतसः ।
अकस्मात्प्रलयं यान्ति गीतरक्ता मृगा इव ॥१२॥
विषयेष्वतिकष्टोऽयं विषयः स्त्रीति नाम यः ।
जीवत्यन्यैः किलाकृष्टस्तदाकृष्टो न जीवति ॥१३॥
खलेष्वकृतविस्रम्भो विषयेष्वनिमग्नधीः ।
साधुष्वभिमुखो नित्यं महतीं श्रियमश्नुते ॥१४॥
स त्वं न वञ्च्यसे धूर्तैर्न साधुभिरुपेक्ष्यसे ।
यथा न बाध्यसे कामैः प्रयतेथास्तथा सदा ॥१५॥
कामं भवान्प्रकृत्यैव धीरः पित्रा च संस्कृतः ।
त्वद्गुणेष्वतिसंतोषो मुखरीकुरुते स्म माम् ॥१६॥
युवराज धुरं पित्रा कल्पितामुद्वह स्थिराम् ।
विजितामपि चानेन पुनर्जय वसुंधराम् ॥१७॥

---

## १४—भविष्णुर्बालः

( नेपथ्ये )

मा खलु चापलं कुरु । कथं गत एव आत्मनः प्रकृतिम् ।

राजा—( कर्णं दत्त्वा ) अभूमिरियमविनयस्य । को नु खल्वेष निषिध्यते । ( शब्दानुसारेणावलोक्य । सविस्मयम्) अये को नु खल्वयमनुबध्यमानस्तपस्विनीभ्यामबालसत्वो बालः ।

अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति ॥

( ततः प्रविशति यथानिर्दिष्टकर्मा तपस्विनीभ्यां बालः )

बालः—जृम्भस्व सिंह दन्तांस्ते गणयिष्यामि ।

प्रथमा—अविनीत किन्नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि । हन्त वर्धते ते संरम्भः । स्थाने खलु ऋषिजनेन सर्व्वदमन इति कृतनामधेयोऽसि ।

राजा—किं नु खलु बालेऽस्मिन् औरस इव पुत्रे स्निह्यति मे मनः। नूनमनपत्यता मां वत्सलयति ।

द्वितीया—एषा खलु केसरिणी त्वां लङ्घते यदि अस्याः पुत्रकं न मुञ्चसि ।

बालः—( सस्मितम् )—अम्महे बळीयः खलु भीतोऽस्मि । (अधरं दर्शयति) ।

प्रथमा—वत्स एतं बालमृगेन्द्रं मुञ्चापरम् ते क्रीडनकं दास्यामि ।

बालः—कुत्र देहि तत् । (हस्तं प्रसारयति) ।

राजा—कथं चक्रवर्तिलक्षणमप्यनेन धार्यते । तथाह्यस्य ।

प्रलोभ्यवस्तुप्रणयप्रसारितो
विभाति जालग्रथिताङ्गुलिः करः ।
अलक्ष्यपत्रान्तरमिद्धरागया
नवोषसा भिन्नमिवैकपङ्कजम् ॥

द्वितीया—सुव्रते न शक्य एष वाङ्मात्रेण विरमयितुम् । गच्छ त्वं मदीये उटजे मार्कण्डेयस्य ऋषिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति तमस्मै उपहर ।

प्रथमा—तथा । ( निष्क्रान्ता ) ।

बालः—अनेनैव तावत्क्रीडिष्यामि ।

राजा—स्पृहयामि खलु दुर्ललितायास्मै ।

आलक्ष्य दन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥

तापसी—भवतु न मामयं गणयति । कोऽत्र ऋषिकुमाराणाम् (राजानमवलोक्य) भद्रमुख एहि तावत् मोचयानेन दुर्म्मोचहस्तग्रहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रम् ।

राजा—(उपगम्य । सस्मितम् ) अयि भो महर्षिपुत्र,

एवमाश्रमविरुद्धवृत्तिना
संयमः किमिति जन्मतस्त्वया ।
सत्वसंश्रयसुखोऽपि दूष्यते
कृष्णसर्पशिशुनेव चन्दनः ॥

तापसी—भद्रमुख न ह्ययम् ऋषिकुमारः ।

राजा—आकारसदृशं चेष्टितमेवास्य कथयति । स्थानप्रत्ययात्त वयमेवंतर्किणः । ( यथाभ्यर्थितमनुतिष्ठन् । बालसुखमुपलभ्यात्मगतम् ) ।

अनेन कस्यापि कुलाङ्कुरेण
स्पृष्टस्य गात्रेषु सुखं ममैवम् ।
कां निर्वृतिं चेतसि तस्य कुर्याद्
यस्यायमङ्कात् कृतिनः प्ररूढः ॥

# १५—सती परवशंगता

स वीक्षमाणस्तत्रस्थो मार्गमाणश्च मैथिलीम् ।
ततो मलिनसंवीतां राक्षसीभिः समावृताम् ॥ १ ॥
उपवासकृशां दीनां निःश्वसन्तीं पुनः पुनः ।
ददर्श शुक्लपक्षादौ चन्द्ररेखामिवामलाम् ॥ २ ॥
मन्दप्रख्यायमानेन रूपेण रुचिरप्रभाम् ।
पिनद्धां धूमजालेन शिखामिव विभावसोः ॥ ३ ॥
पीतेनैकेन संवीतां क्लिष्टेनोत्तमवाससा ।
सपङ्कामनलंकारां विपद्मामिव पद्मिनीम् ॥ ४ ॥
पीडितां दुःखसंतप्तां परिक्षीणां तपस्विनीम् ।
ग्रहेणाङ्गारकेणेव पीडितामिव रोहिणीम् ॥ ५ ॥
अश्रुपूर्णमुखीं दीनां कृशामनशनेन च ।
शोकध्यानपरां दीनां नित्यं दुःखपरायणाम् ॥ ६ ॥
प्रियं जनमपश्यन्ती पश्यन्ती राक्षसीगणम् ।
स्वगणेन मृगीं हीनां श्वगणेनावृतामिव ॥ ७ ॥
नीलनागभया वेण्या जघनं गतयैकया ।
नीलया नीरदापाये वनराज्या महीमिव ॥ ८ ॥
सुखार्हां दुःखसंतप्तां व्यसनानामकोविदाम् ।
तां विलोक्य विशालाक्षीमधिकं मलिनां कृशाम् ॥ ९ ॥
भूमौ सुतनुमासीनां नियतामिव तापसीम् ।
निश्वासबहुलां भीरुं भुजगेन्द्रवधूमिव ॥१०॥
शोकजालेन महता विततेन न राजतीम् ।
संसक्तां धूमजालेन शिखामिव विभावसोः ॥११॥

तां स्मृतीमिव संदिग्धामृद्धिं निप्रतितामिव ।
विहृतामिव च श्रद्धामाशां प्रतिहृतामिव ॥१२॥
सोपसर्गां यथा सिद्धिं बुद्धिं सकलुषामिव ।
अभूतेनापवादेन कीर्तिं निपतितामिव ॥१३॥
रामोपरोधव्यथितां रक्षोगणनिपीडिताम् ।
अबलां मृगशावाक्षीं वीक्षमाणां ततस्ततः ॥१४॥
वाष्पाम्बुपरिपूर्णेन कृष्णवक्त्राक्षिपक्ष्मणा ।
वदनेनाप्रसन्नेन निःश्वसन्तीं पुनः पुनः ॥१५॥
मलपङ्कधरां दीनां मण्डनार्हाममण्डिताम् ।
प्रभां नक्षत्रराजस्य कालमेघैरिवावृताम् ॥१६॥
तस्य संदिदिहे बुद्धिस्तथा सीतां निरीक्ष्य च ।
आम्नायानामयोगेन विद्यां प्रशिथिलामिव ॥१७॥
दुःखेन बुबुधे सीतां हनुमाननलंकृताम् ।
संस्कारेण यथा हीनां वाचमर्थान्तरं गताम् ॥१८॥

---

## १६—सत्यास्तेजस्विता

तस्य तद्वचनं श्रुत्वा सीता रौद्रस्य रक्षसः ।
दुःखार्ता रुदती सीता वेपमाना तपस्विनी ॥ १ ॥
चिन्तयन्ती वरारोहा पतिमेव पतिव्रता ।
तृणमन्तरतः कृत्वा प्रत्युवाच शुचिस्मिता ॥ २ ॥
निवर्तय मनो मत्तः स्वजने क्रियतां मनः ।
न मां प्रार्थयितुं युक्तस्त्वं सिद्धिमिव पापकृत् ॥ ३ ॥

अकार्यं न मया कार्यमेकपत्न्या विगर्हितम् ।
कुलं संप्राप्तया पुण्यं कुले महति जातया ॥ ४ ॥
एवमुक्त्वा तु वैदेही रावणं तं यशस्विनी ।
रावणं पृष्ठतः कृत्वा भूयो वचनमब्रवीत् ॥ ५ ॥
साधु धर्ममवेक्षस्व साधु साधुव्रतं चर ।
यथा तव तथान्येषां रक्ष्या दारा निशाचर ॥ ६ ॥
अतुष्टं स्वेषु दारेषु चपलं चपलेन्द्रियम् ।
नयन्ति निकृतिप्रज्ञं परदाराः पराभवम् ॥ ७ ॥
इह सन्तो न वा सन्ति सतो वा नानुवर्तसे ।
यथा हि विपरीता ते बुद्धिराचारवर्जिता ॥ ८ ॥
अकृतात्मानमासाद्य राजानमनये रतम् ।
समृद्धानि विनश्यन्ति राष्ट्राणि नगराणि च ॥ ९ ॥
शक्या लोभयितुं नाहमैश्वर्येण धनेन वा ।
अनन्या राघवेणाहं भास्करेण यथा प्रभा ॥ १० ॥
उपधाय भुजं तस्य लोकनाथस्य सत्कृतम् ।
कथं नामोपधास्यामि भुजमन्यस्य कस्यचित् ॥ ११ ॥
प्रसादयस्व त्वं चैनं शरणागतवत्सलम् ।
मां चास्मै प्रयतो भूत्वा निर्यातयितुमर्हसि ॥ १२ ॥
एवं हि ते भवेत् स्वस्ति संप्रदाय रघूत्तमे ।
अन्यथा त्वं हि कुर्वाणः परां प्राप्स्यसि चापदम् ॥ १३ ॥
वर्जयेद् वज्रमुत्सृष्टं वर्जयेदन्तकश्चिरम् ।
त्वद्विधं न तु संक्रुद्धो लोकनाथः स राघवः ॥ १४ ॥
रामस्य धनुषः शब्दं श्रोष्यसि त्वं महास्वनम् ।
शतक्रतुविसृष्टस्य निर्घोषमशनेरिव ॥ १५ ॥

इह शीघ्रं सुपर्वाणो ज्वलितास्या इवोरगाः ।
इषवो निपतिष्यन्ति रामलक्ष्मणलक्षिताः ॥१६॥
न हि गन्धमुपाघ्राय रामलक्ष्मणयोस्त्वया ।
शक्यं संदर्शने स्थातुं शुना शार्दूलयोरिव ॥१७॥
क्षिप्रं तव स नाथो मे रामः सौमित्रिणा सह ।
तोयमल्पमिवादित्यः प्राणानादास्यते शरैः ॥१८॥
सीताया वचनं श्रुत्वा परुषं राक्षसेश्वरः ।
प्रत्युवाच ततः सीतां विप्रियं प्रियदर्शनाम् ॥१९॥
यथा यथा सान्त्वयिता वश्यः स्त्रीणां तथा तथा ।
यथा यथा प्रियं वक्ता परिभूतस्तथा तथा ॥२०॥
परुषाणि हि वाक्यानि यानि यानि ब्रवीषि माम् ।
तेषु तेषु वधो युक्तस्तव मैथिलि दारुणः ॥२१॥
एवमुक्त्वा तु वैदेहीं रावणो राक्षसाधिपः ।
क्रोधसंरम्भसंयुक्तः सीतामुत्तरमब्रवीत् ॥२२॥
द्वौ मासौ रक्षितव्यौ मे योऽवधिस्ते मया कृतः।
ततस्त्वां प्रातराशार्थे सूदाश्छेत्स्यन्ति खण्डशः ॥२३॥
ततः सा दुःखिता सीता रावणं राक्षसाधिपम् ।
उवाचात्महितं वाक्यं वृत्तशौटीर्यगर्वितम् ॥२४॥
नूनं न ते जनः कश्चिदस्मिन्निःश्रेयसि स्थितः ।
निवारयति यो न त्वां कर्मणोऽस्माद् विगर्हितात् ॥२५॥
मां हि धर्मात्मनः पत्नीं शचीमिव शचीपतेः ।
त्वदन्यस्त्रिषु लोकेषु प्रार्थयेन्मनसाऽपि कः ॥२६॥
राक्षसाधम रामस्य भार्याममिततेजसः ।
उक्तवानसि यत् पापं क्व गतस्तस्य मोक्ष्यसे ॥२७॥

यथा द्विपश्च मातङ्गः शशश्च सहितौ वने ।
तथा द्विरदवद्रामस्त्वं नीच शशवत् स्मृतः ॥२८॥
स त्वमिक्ष्वाकुनाथं वै क्षिपन्निह न लज्जसे ।
चक्षुषो विषये तस्य न यावदुपगच्छसि ॥२९॥
इमे ते नयने क्रूरे विकृते कृष्णपिङ्गले ।
क्षितौ न पतिते कस्मान् मामनार्य निरीक्षतः ॥३०॥
तस्य धर्मात्मनः पत्नीं स्नुषां दशरथस्य च ।
कथं व्याहरतो मां ते न जिह्वा पाप शीर्यति ॥३१॥
शूरेण धनदभ्रात्रा बलैः समुदितेन च ।
अपोह्य रामं कस्माच्चिद् दारचौर्यं त्वया कृतम् ॥३२॥
नापहर्तुमहं शक्या तस्य रामस्य धीमतः ।
विधिस्तव वधार्थाय विहितो नात्र संशयः ॥ ३३ ॥
सीताया वचनं श्रुत्वा रावणो राक्षसाधिपः ।
विवृत्य नयने क्रूरे जानकीमन्ववैक्षत ॥ ३४॥
प्रस्थितः स दशग्रीवः कम्पयन्निव मेदिनीम् ।
ज्वलद्भास्करसंकाशं प्रविवेश निवेशनम् ॥ ३५ ॥

---

## १७—अर्जुनस्यात्मप्रत्ययः

षड्रथान् धार्तराष्ट्रस्य मन्यसे यान् बलाधिकान् ।
तेषां वीर्यं ममार्धेन न तुल्यमिति मे मतिः ॥ १ ॥
अस्त्रमस्त्रेण सर्वेषामेतेषां मधुसूदन ।
मया द्रक्ष्यसि निर्भिन्नं जयद्रथवधैषिणा ॥ २ ॥

द्रोणस्य मिषतश्चाहं सगणस्य विपश्चितः ।
मूर्धानं सिन्धुराजस्य पातयिष्यामि भूतले ॥ ३ ॥
यदि साध्याश्च रुद्राश्च वसवश्च सहाश्विनः ।
मरुतश्च सहेन्द्रेण विश्वेदेवाः सहेश्वराः ॥ ४ ॥
पितरः सहगन्धर्वाः सुपर्णाः सागराद्रयः ।
द्यौर्वियत् पृथिवी चेयं दिशश्च सदिगीश्वराः ॥ ५ ॥
ग्राम्यारण्यानि भूतानि स्थावराणि चराणि च ।
त्रातारः सिन्धुराजस्य भवन्ति मधुसूदन ॥ ६ ॥
तथापि वाणैर्निहितं श्वो द्रष्टासि मया रणे ।
सत्येन च शपे कृष्ण तथैवायुधमालभे ॥ ७ ॥
यस्य गोप्ता महेष्वासो द्रोणः पापस्य दुर्मतेः ।
तमेव प्रथमं द्रोणमभियास्यामि केशव ॥ ८ ॥
तस्मिन् युद्धमिदं बद्धं मन्यते स सुयोधनः ।
तस्मात्तस्यैव सेनाग्रं भित्वा यास्यामि सैन्धवम्॥ ९ ॥
द्रष्टासि श्वो महेष्वासान्नाराचैस्तिग्मतेजितैः ।
शृङ्गाणीव गिरेर्वज्रैर्दार्यमाणान् मया युधि ॥ १० ॥
नरनागाश्वदेहेभ्यो विस्रविष्यति शोणितम् ।
पतद्भ्यः पतितेभ्यश्च विभिन्नेभ्यः शितैः शरैः ॥ ११ ॥
गाण्डीवप्रेषिता बाणा मनोऽनिलसमा जवे ।
नृनागाश्वान् विदेहासून् कर्तारश्च सहस्रशः ॥ १२ ॥
शक्राद् भीष्मात् कृपाद्द्रोणाद्देवाद्रुद्राच्च यन्मया ।
उपात्तमस्त्रं घोरं तद्द्रष्टारोऽत्र नरा युधि ॥ १३ ॥
ब्राह्मेणास्त्रेण चास्त्राणि हन्यमानानि संयुगे ।
मया द्रष्टासि सर्वेषां सैन्धवस्याभिरक्षिणाम् ॥ १४ ॥

शरवेगसमुत्कृत्तैः राज्ञां केशव मूर्धभिः ।
आस्तीर्यमाणां पृथिवीं द्रष्टासि श्वो मया युधि ॥१५॥
क्रव्यादांस्तर्पयिष्यामि द्रावयिष्यामि शात्रवान् ।
सुहृदो नन्दयिष्यामि प्रमथिष्यामि सैन्धवम् ॥ १६ ॥
बह्वागस्कृत् कुसंबन्धी पापदेशसमुद्भवः ।
मया सैन्धवको राजा हतः स्वान् शोचयिष्यति ॥ १७ ॥
सर्वे क्षीरान्नभोक्तारः पापाचारा रणाजिरे ।
मया सराजका बाणैर्हता नश्यन्ति सैन्धवाः॥ १८ ॥
तथा प्रभाते कर्तास्मि यथा कृष्ण सुयोधनः ।
नान्यं धनुर्धरं लोके मंस्यते मत्समं युधि ॥ १९ ॥
गाण्डीवं च धनुर्दिव्यं योद्धारं च धनञ्जयम् ।
यन्तारं च हृषीकेशं कोऽतिवर्तेत संयुगे ॥ २० ॥
यथा लक्ष्म स्थिरं चन्द्रे समुद्रे च यथा जलम् ।
एवमेतां प्रतिज्ञां मे सत्यां विद्धि जनार्दन ॥ २१ ॥
मावमंस्था ममास्त्राणि मावमंस्थाश्च गाण्डिवम् ।
मावमंस्था बलं बाह्वोर्मावमंस्था धनञ्जयम् ॥ २२ ॥
गाण्डीवं च धनुर्दिव्यं योद्धा चाहं नरर्षभ ।
त्वं च यन्ता हृषीकेश किन्नु स्यादजितं मया ॥ २३ ॥
त्वं च माधव सर्वं तत्तथा प्रतिविधास्यसि ।
यथा रिपूणां मिषतां प्रमथिष्यामि सैन्धवम् ॥ २४ ॥
ध्रुवं वै ब्राह्मणे सत्यं ध्रुवा साधुषु सन्नतिः ।
श्रीर्ध्रुवाऽपि च दक्षेषु ध्रुवो नारायणे जयः ॥ २५ ॥

---

# १८—अर्जुनस्य समरसामर्थ्यम्

संजय उवाच—

श्रुत्वा निनादं धनुषश्च तस्य
विस्पष्टमुत्कृष्टमिवान्तकस्य ।
शक्राशनिस्फोटसमं सुघोरं
विकृष्यमाणस्य धनञ्जयेन ॥१॥

त्रासोद्विग्नं तथोद्भ्रान्तं त्वदीयं तद्बलं नृप ।
युगान्तवातसंक्षुब्धं जलद्वीचितरङ्गितम् ॥२॥
प्रलीनमीनमकरं सागराम्भ इवाभवत् ।
मध्यन्दिनगतं सूर्यमातपन्तमिवाम्बरे ।
न शेकुः सर्वभूतानि पाण्डवं प्रतिवीक्षितुम् ॥३॥
स रणे व्यचरत् पार्थः प्रेक्ष्यमाणो धनञ्जयः ।
युगपद् दिक्षु सर्वासु सर्वाण्यस्त्राणि दर्शयन् ॥४॥
आददानं महाराज संदधानं च पाण्डवम् ।
उत्कर्षन्तं सृजन्तं च न स्म पश्याम लाघवात् ॥५॥
ततः क्रुद्धो महाबाहुरैन्द्रमस्त्रं दुरासदम् ।
प्रादुश्चक्रे महाराज त्रासयन् सर्वभारतान् ॥६॥
ततः शरा प्रादुरासन् दिव्यास्त्रप्रतिमन्त्रिताः ।
प्रदीपाश्च शिखिमुखाः शतशोऽथ सहस्रशः ॥७॥
आकर्णपूर्णनिर्मुक्तैरग्न्यार्कांशुनिभैः शरैः ।
नभोऽभवत्तद् दुष्प्रेक्ष्यमुल्काभिरिव संवृतम् ॥८॥
नाशयामास विक्रम्य शरैर्दिव्यास्त्रमंत्रितैः ।
नैशं तमोंशुभिः क्षिप्रं दिनादाविव भास्करः ॥९॥

ततो दिव्यास्त्रविदुषा प्रहिता सायकांशवः ।
समाप्लवन् द्विषत्सैन्यं लोकं भानोरिवांशवः ॥१०॥
एवं स मृद्नन् शत्रूणां जीवितानि यशांसि च ।
पार्थश्चचार संग्रामे मृत्युर्विग्रहवानिव ॥११॥
स किरीटानि वस्त्राणि साङ्गदान् विपुलान् भुजान् ।
सकुण्डलयुगान् कर्णान् केषांचिदहरच्छरैः ॥१२॥
स तोमरान् गजस्थानां सप्रासान् हयसादिनाम् ।
स तोदान् नियन्तॄणां बाहूंश्चिच्छेद पाण्डवः ॥१३॥
प्रदीप्तोग्रशरार्चिष्मान् बभौ तत्र धनञ्जयः ।
सविस्फुलिङ्गाग्रशिखो ज्वलन्निव हुताशनः ॥१४॥
तं देवराजप्रतिमं सर्वशस्त्रभृतां वरम् ।
युगपद्दिक्षु सर्वासु रथस्थं पुरुषर्षभम् ॥१५॥
निक्षिपन्तं महास्त्राणि प्रेक्षणीयं धनञ्जयम् ।
नृत्यन्तं रथमार्गेषु धनुर्ज्यातलनादिनम् ॥१६॥
निरीक्षितुं न शेकुस्ते यत्नवन्तोऽपि पार्थिवाः ।
महास्त्रसंप्लवे तस्मिन् जिष्णुना संप्रवर्तिते ॥१७॥
सुदुस्तरे महाघोरे ममज्जुर्योधपुंगवाः ।
उत्कृत्तवदनैर्देहैः शरीरैः कृत्तबाहुभिः ॥१८॥
भुजैश्च पाणिनिर्मुक्तैः पाणिभिर्व्यङ्गुलीकृतैः ।
कृत्ताग्रहस्तैः करिभिः कृत्तदन्तैर्मदोत्कटैः ॥१९॥
हयैश्च विधुरग्रीवैः रथैश्च शकलीकृतैः ।
निकृत्तान्त्रैः कृत्तपादैः तथान्यैः कृत्तसन्धिभिः ॥२०॥
निश्चेष्टैर्विस्फुरद्भिश्च शतशोऽथ सहस्रशः ।
मृत्योराघातललितं तत् पार्थायोधनं महत् ॥२१॥

अपश्याम महीपाल भीरूणां भयवर्धनम् ।
आक्रीडमिव रुद्रस्य पुराभ्यर्दयतः पशून् ॥२२॥
गजानां क्षुरनिर्मुक्तैः करैः सभुजगेव भूः ।
क्वचिद् बभौ स्रग्विणीव वक्त्रपद्मैः समाचिता ॥२३॥

विचित्रोष्णीषमुकुटैः केयूराङ्गदकुण्डलैः ।
स्वर्णचित्रतनुत्रैश्च भाण्डैश्च गजवाजिनाम् ॥२४॥
किरीटशतसंकीर्णा तत्र तत्र समाचिता ।
विरराज भृशं चित्रा मही नववधूरिव ॥२५॥

तं दृष्ट्वा तस्य विक्रान्तमन्तकस्येव रूपिणः ।
अभूतपूर्वं कुरुषु भयमागाद्रणाजिरे ॥२६॥
तत आदाय वीराणामस्त्रैरस्त्राणि पाण्डवः ।
आत्मानं रौद्रमाचष्ट रौद्रकर्मण्यधिष्ठितः ॥२७॥

विसृजन् दिक्षु सर्वासु शरानच्युतसारथिः ।
सरथो व्यचरत्तूर्णं प्रेक्षणीयो धनञ्जयः ॥२८॥

---

## १९—पुत्रं प्रति पत्रम्

स्वस्ति । यज्ञशरणात्सेनापतिः पुष्यमित्रो वैदिशस्थं पुत्रमायुष्मन्तमग्निमित्रं स्नेहात्परिष्वज्य अनुदर्शयति । विदितमस्तु । योऽसौ राजसूययज्ञे दीक्षितेन मया राजपुत्रशतपरिवृतं वसुमित्रं गोप्तारमादिश्य निरर्गलस्तुरगो विसृष्टः स सिन्धोर्दक्षिणरोधसि चरन्नश्वानीकेन यवनानां प्रार्थितः । तत उभयोः सेनयोर्महानासीत्संमर्दः । किंतु वसुमित्रेण प्रसह्य ह्रियमाणो मे वाजिराजो निवर्तितः ।

सोऽहमिदानीं पौत्रेण प्रत्याहृताश्वो यक्ष्ये। तदिदानीमकालहीनं विगतरोषचेतसा भवता वधूजनेन सह यज्ञसंदर्शनायागंतव्यमिति।

---

## २०—प्रणयकुपितः सहाध्यायी

सखे पुण्डरीक नैतदनुरूपं भवतः। क्षुद्रजनक्षुण्ण एष मार्गः। धैर्यधना हि साधवः। किं यः कश्चित्प्राकृत इव विक्लवीभवन्तमात्मानं न रुणत्सि। कुतस्तवापूर्वोऽयमद्येन्द्रियोपप्लवो येनास्येवंकृतः। क्व ते तद्धैर्यम्। क्वासाविन्द्रियजयः। क्व तद्वशित्वं चेतसः। क्व सा प्रशान्तिः। क्व तत्कुलक्रमागतं ब्रह्मचर्यम्। क्व सा सर्वविषयनिरुत्सुकता। क्व ते गुरूपदेशाः। क्व तानि श्रुतानि। क्व ता वैराग्यबुद्धयः। क्व तदुपभोगविद्वेषित्वम्। क्व सा सुखपराङ्मुखता। क्वासौ तपस्याभिनिवेशः। क्व सा संयमिता। क्व भोगानामुपर्यरुचिः। क्व तद्यौवनानुशासनम्।

सर्वथा निष्फला प्रज्ञा। निर्गुणो धर्मशास्त्राभ्यासः। निरर्थकः संस्कारः। निरुपकारको गुरूपदेशविवेकः। निष्प्रयोजना प्रबुद्धता। निष्कारणं ज्ञानम्। यदत्र भवादृशा अपि रागाभिषङ्गैः कलुषीक्रियन्ते प्रमादैश्चाभिभूयन्ते। कथं करतलाद्गलितामपहृतामक्षमालामपि न लक्षयसि। अहो विगतचेतनत्वम्। अपहृता नामेयम्। इदमपि तावदपह्रियमाणमनयाऽनार्यया निवार्यतां हृदयम्।

---

## २१—दारिद्र्यं नाम षष्ठं महापातकम्

मैत्रय:-अन्यं ब्राह्मणम् उपनिमन्त्रयतु भवान् । व्यापृत इदानीमहम् । अथवा मयाऽपि मैत्रेयेण परस्य आमन्त्रणकानि भक्षितव्यानि । हा अवस्थे ! तूलयसि । य इदानीमहं तत्रभवतश्चारुदत्तस्य ऋद्ध्या अहोरात्रप्रयत्नसिद्धैः उद्गारसुरभिगन्धैर्मोदकैरेवाशितः अभ्यन्तरचतुःशालकद्वारे उपविष्टो मल्लकशतपरिवृतश्चित्रकर इव अङ्गुलीभिः स्पृष्ट्वा स्पृष्ट्वा अपनयामि । नगरचत्वरवृषभ इव रोमन्थायमानस्तिष्ठामि । स इदानीमहं तस्य दरिद्रतया यत्र तत्र चरित्वा गृहपारावत इव आवासनिमित्तमिह आगच्छामि । एष आर्यचारुदत्तस्य प्रियवयस्येन चूर्णवृद्धेन जातीकुसुमवासितः प्रावारकोऽनुप्रेषितः । सिद्धीकृतदेवकार्यस्य आर्यचारुदत्तस्य उपनेतव्य इति । तद् यावदार्यचारुदत्तं प्रेक्षे ( परिक्रम्यावलोक्य च ) एष आर्यचारुदत्तः सिद्धीकृतदेवकार्यो गृहदेवताभ्यो बलिं कुर्वन्नित एवागच्छति ।

( ततः प्रविशति यथानिर्दिष्टश्चारुदत्तः )

चारुदत्तः—(ऊर्ध्वमवलोक्य सनिर्वेदं निःश्वस्य च )

यासां बलिः सपदि मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विलुप्तपूर्वः ।
तास्वेव सम्प्रति विरूढतृणाङ्कुरासु
बीजाञ्जलिः पतति कीटमुखावलीढः ।

( इति मन्दं मन्दं परिक्रम्योपविष्टः )

विदूषकः—एष आर्यचारुदत्तः। तद्यावत् साम्प्रतमुपसर्पामि।
( उपसृत्य ) स्वस्ति भवते, वर्धतां भवान्।

चारुदत्तः—अये सर्वकालमित्रं मैत्रेयः प्राप्तः। सखे स्वागत-
मास्यताम्।

विदूषकः—यद्भवान् आज्ञापयति। ( उपविश्य ) भो वयस्य एष ते
प्रियवयस्येन चूर्णवृद्धेन जातीकुसुमवासितः प्रकारकोऽनु-
प्रेषितः सिद्धीकृतदेवकार्यस्य आर्यचारुदत्तस्य त्वया उपने-
तव्य इति। ( समर्पयति )

चारुदत्तः—( गृहीत्वा सचिन्तःस्थितः )

विदूषकः—भो इदं किं चिन्त्यते ?

चारुदत्तः—वयस्य

सुखं हि दुःखान्यनुभूय शोभते
धनान्धकारेष्विव दीपदर्शनम्।
सुखात्तु यो याति नरो दरिद्रतां
धृतः शरीरेण मृतः स जीवति॥

विदूषकः—भो वयस्य मरणाद्दारिद्र्याद् वा कतरत्ते रोचते।

चारुदत्तः—वयस्य

दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यम्।
अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम्।

विदूषकः—भो वयस्य अलं सन्तप्तेन। प्रणयिजनसंक्रामितविभवस्य
सुरगणपीतशेषस्येव प्रतिपच्चन्द्रस्य परिक्षयोऽपि तेऽधिकतरं
रमणीयः।

चारुदत्तः—वयस्य न ममार्थान् प्रति दैन्यम्। पश्य—

एतत्तु मां दहति यद्गृहमस्मदीयं
क्षीणार्थमित्यतिथयः परिवर्जयन्ति ।
संशुष्कसान्द्रमदलेखमिव भ्रमन्तः
कालात्यये मधुकराः करिणः कपोलम् ।

विदूषकः—भो वयस्य एते खलु दास्याःपुत्रा अर्थकल्यवर्त्ता वरटाभीता इव गोपालदारका यत्र तत्र न खाद्यन्ते तत्र तत्र गच्छन्ति ।

चारुदत्तः—वयस्य

सत्यं न मे विभवनाशकृतास्ति चिन्ता
भाग्यक्रमेण हि धनानि भवन्ति यान्ति ।
एतत्तु मां दहति नष्टधनाश्रयस्य
यत्सौहृदादपि जनाः शिथिलीभवन्ति ॥

अपि च

दारिद्र्याद्ध्रियमेति तत्परिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति शोकविहतो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥

विदूषकः—भो वयस्य तमेव अर्थकल्यवर्त्तं स्मृत्वा अलं संतप्तेन ।

चारुदत्तः—वयस्य दारिद्र्यं हि पुरुषस्य

निवासश्चिन्तायाः परपरिभवो वैरमपरं
जुगुप्सा मित्राणां स्वजनजनविद्वेषकरणम् ।
वनं गन्तुं बुद्धिर्भवति च कलत्रात्परिभवो
हृदिस्थः शोकाग्निर्न च दहति सन्तापयति च ॥

तद्वयस्य कृतो मया गृहदेवताभ्यो बलिः। त्वमपि गच्छ मातृभ्यो बलिमुपहर।

विदूषकः—न गमिष्यामि।

चारुदत्तः—किमर्थम्।

विदूषकः—यत एवं पूज्यमाना देवता न प्रसीदन्ति, तत्को गुणो देवेषु अर्चितेषु।

चारुदत्तः—वयस्य मा मैवम्। गृहस्थस्य नित्योऽयं विधिः।

तपसा मनसा वाग्भिः पूजिता बलिकर्मभिः।
तुष्यन्ति शमिनां नित्यं देवताः किं विचारितैः॥

तद्गच्छ मातृभ्यो बलिमुपहर

विदूषकः—भो न गमिष्यामि। अन्यः कोऽपि प्रयुज्यताम्। मम पुनर्ब्राह्मणस्य सर्वमेव विपरीतं परिणमते आदर्शगतेव च्छाया वामतो दक्षिणा दक्षिणतो वामा। अन्यच्च। एतस्यां प्रदोषवेलायामिह राजमार्गे गणिका विटाश्चेटा राजवल्लभाश्च पुरुषाः सञ्चरन्ति। तन्मण्डूकलुब्धस्येव कालसर्पस्य मूषिक इव अभिमुखावस्थित इदानीं भविष्यामि। त्वमिहोपविष्टः किं करिष्यसि।

चारुदत्तः—भवतु तिष्ठ तावत्। अहं समाधिं निर्वर्त्तयामि। (तथा कृत्वा) वयस्य समाप्तजपोऽस्मि। तत्साम्प्रतं गच्छ मातृभ्यो बलिमुपहर।

विदूषकः—भो न गमिष्यामि

चारुदत्तः—धिक् कष्टम्

दारिद्र्यात्पुरुषस्य बान्धवजनो वाक्ये न सन्तिष्ठते
सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः।

सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते
पापं कर्म च यत्परैरपि कृतं तत्तस्य संभाव्यते ॥

अपिच

सङ्गं नैव हि कश्चिदस्य कुरुते सम्भाष्यते नादरात्
सम्प्राप्तो गृहमुत्सवेषु धनिनां सावज्ञमालोक्यते ।
दूरादेव महाजनस्य विहरत्यल्पच्छदो लज्जया
मन्ये निर्धनता प्रकाममपरं षष्ठं महापातकम् ॥

अपिच

दारिद्र्य शोचामि भवन्तमेवमस्मच्छरीरे सुहृदित्युषित्वा ।
विपन्नदेहे मयि मन्दभाग्ये ममेति चिन्ता क गमिष्यति त्वम् ॥

---

## २२—विद्यागृहादुपावर्त्तनम्

एवं च क्रमेण समारूढयौवनारम्भं परिसमाप्तसकलकला-विज्ञानमधीताशेषविद्यं चावगम्यानुमोदितमाचार्यैश्चंद्रापीडमानेतुं राजा बलाधिकृतं बलाहकनामानमाहूय बहुतुरगबलपदातिपरिवृत-मति प्रशस्तेऽहनि प्राहिणोत् । स गत्वा विद्यागृहं द्वाःस्थैः समावेदितः प्रविश्य शितितलावलम्बितचूडामणिना शिरसा प्रणम्य स्वभूमिस-मुचिते राजसमीप इवं सविनयमासने राजपुत्रानुमतो न्यषीदत् । स्थित्वा च मुहूर्तमात्रं बलाहकश्चन्द्रापीडमुपसृत्य दर्शितविनयो व्यजिज्ञपत् । कुमार महाराजः समाज्ञापयति । पूर्णा नो मनोरथाः । अधीतानि शास्त्राणि । शिक्षिताः सकलाः कलाः । गतोसि सर्वा-स्वायुधविद्यासु परां प्रतिष्ठाम् । अनुमतोऽसि निर्गमाय विद्यागृहात्सर्वा-चार्यैः । उपगृहीतशिक्षं गन्धगजकुमारकमिव वारिबन्धाद्विनिर्गतम-

वगतसकलकलाकलापं पौर्णमासीशशिनमिव नवोद्गतं पश्यतु त्वां जनः । व्रजन्तु सफलतामतिचिरदर्शनोत्कण्ठितानि लोकलोचनानि। दर्शनं प्रति ते समुत्सुकान्यतीव सर्वाण्यन्तःपुराणि । अयमत्रभवतो दशमो वत्सरो विद्यागृहमधिवसतः । प्रविष्टोसि षष्ठमनुभवन्वर्षम् । एवं संपिण्डितेनाधुना षोडशेन प्रवर्धसे । तदद्य प्रभृति निर्गत्य दर्शनोत्सुकाभ्यो दत्वा दर्शनमखिलाभ्यो मातृभ्योऽभिवाद्य च गुरूनपगतनियन्त्रणो यथासुखमनुभव राज्यसुखानि नवयौवनललितानि च । संमानय राजलोकम् । पूजय द्विजातीन् परिपालय प्रजाः । आनन्दय बन्धुवर्गम् । अयं च ते त्रिभुवनैकरत्नमिन्द्रायुधनामा तुरंगमः प्रेषितो महाराजेन द्वारि तिष्ठति। एष खलु देवस्य पारसीकाधिपतिना महाराजाधिरोहणयोग्य इति संदिश्य प्रहितः । दृष्ट्वा च निवेदितं लक्षणविद्भिः । देव यान्युच्चैःश्रवसः श्रूयन्ते लक्षणानि तैरयमुपेतो, नैवंविधो भूतो भावी वा तुरंगम इति । तदयमनुगृह्यतामधिरोहणेन ! इदं च राजपुत्राणां सहस्रं द्वारि प्रणामलालसं प्रतिपालयति । इत्यभिधाय विरतवचसि बलाहके चन्द्रापीडः पितुराज्ञां शिरसि कृत्वा नवजलधरध्वानगम्भीरया गिरा प्रवेश्यतामिन्द्रायुध इति निर्जिगमिषुरादिदेश ।

---

## २३—सूर्योपस्थानम्

अरुण एष प्रकाशः पूर्वस्यां भगवतो मरीचिमालिनः । एष भगवान् मणिराकाशमण्डलस्य, चक्रवर्त्ती खेचरचक्रस्य, कुण्डलमाखण्डलदिशः, दीपको ब्रह्माण्डभाण्डस्य, प्रेयान् पुण्डरीकपटलस्य, शोकविमोकः कोकलोकस्य, अवलम्बो रोलम्बकदम्बस्य, सूत्रधारः

सर्वव्यवहारस्य, इनश्च दिनस्य। अयमेव अहोरात्रं जनयति, अयमेव वत्सरं द्वादशसु भागेषु विभनक्ति, अयमेव कारणं षण्णामृतूनाम्, एष एवाङ्गीकरोति उत्तरं दक्षिणं चायनम्, एनेनैव सम्पादिता युगभेदा, एनेनैव कृताः कल्पभेदा, एनमेवाश्रित्य भवति परमेष्ठिनः परार्धसंख्या, असावेव चर्कर्त्ति बर्भर्त्ति जर्हर्ति च जगत्, वेदा एतस्यैव बन्दिनः, गायत्री अमुमेव गायति, ब्रह्मनिष्ठा ब्राह्मणा अमुमेवाहरहरुपतिष्ठन्ते। धन्य एष कुलमूलं श्रीरामचन्द्रस्य प्रणम्य एष विश्वेषामित्युद्देश्यन्तं भास्वन्तं प्रणमन्नुपतिष्ठते कश्चिद् गुरुसेवनपटुर्विप्रवटुः—

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते
धुर्यां लक्ष्मीमथ मयि भृशं धेहि देव प्रसीद।
यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन् भूयसे मङ्गलाय॥

---

## २४—वासुदेवस्य जन्ममाहात्म्यम्

वसुदेवः—देवकि! अर्धरात्रं खलु वर्तते। प्रसुप्तो मथुरायां सर्वो जनः। तस्माद् यावन्न कश्चिद् पश्यति तावद् बालं गृहीत्वापक्रामामि।

देवकी—कार्यपुत्र इमं नेष्यति।

वसुदेवः—देवकि! सत्यं ब्रवीषि। अहमपि न जाने। किन्तु; एकच्छत्रच्छायां पृथिवीं समाज्ञापयति दुरात्मा कंसः। तत्क्व नु खल्वयमायुष्मान् नेतव्यो भविष्यति। अथवा यत्र दैव विधास्यति, तत्र बालं गृहीत्वापक्रामामि।

देवकी—आर्यपुत्र ! इच्छामि तावदेनं सुदृष्टं कर्तुम् ।

वसुदेवः—अयि अतिपुत्रवत्सले !

किं द्रष्टव्यः शशाङ्कोऽयं राहोर्वदनमण्डले ।
त्वयाप्यस्य सुदृष्टस्य कंसो मृत्युर्भविष्यति ॥

देवकी—सर्वथा न भविष्यति ।

वसुदेवः—यद् भवत्याभिहितं तत्सर्वदैवतैरभिहितं भवतु । आनय ।

देवकी—गृह्णात्वार्यपुत्रः ।

वसुदेवः—( गृहीत्वा ) देवकि प्रविश त्वमभ्यन्तरम् ।

देवकी—एषा गच्छामि मन्दभाग्या ।

वसुदेवः—एषा देवकी ।

हृदयेनेह तत्राङ्गैर्द्विधाभूतेव गच्छति ।
यथा नभसि तोये च चन्द्रलेखा द्विधाकृता ॥

हन्त प्रविष्टा देवकी । यावदहमपि नगरद्वारं संश्रयामि ।
एष भोः,

प्रथमसुतविनाशजातमन्यु—
नृपतिभयाकुलितः प्रगृह्य बालम् ।
त्वरिततरमिह प्रयामि मार्गे
गिरिमिव मन्दरमुद्वहन् भुजाभ्याम् ॥

(परिक्रम्य) इदं नगरद्वारम् । यावत् प्रविशामि । (प्रविश्य) अये प्रसुप्तो मथुरायां सर्वो जनः । यावदपक्रामामि । (परिक्रम्य) निष्क्रान्तोऽस्मि मथुरायाः । अहो बलवांश्चायमन्धकारः । सम्प्रति हि,

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥

अहो तमसः प्रभुत्वम्

अप्रकाशा इव दिशो घनीभूता इव द्रुमाः ।

सुनिविष्टस्य लोकस्य कृतो रूपविपर्ययः ॥

नाहं गन्तुं समर्थः । अये दीपिकालोकः । किन्नु खलु दुरात्मा कंसो ममापक्रमणं ज्ञात्वा दीपिकाभिः परिवृतो मां ग्रहीतुमागतो भवेत् । भवत्वहमस्य दर्पप्रशमनं करोमि ( खड्गमुत्कोशयति ) ( निवृत्यावलोक्य ) अये न कश्चिद् दृश्यते । आ,

तमसा संवृते लोके मम मार्गमपश्यतः ।

अपक्रमणहेतोस्तु कुमारेण कृता प्रभा ॥

एष मार्गः । यावदपक्रामामि । अये इयं भगवती यमुना कालवर्षसंपूर्णा सन्निहिता । अहो व्यर्थो मे परिश्रमः । किमिदानीं करिष्ये । भवतु, दृष्टम् ।

इमां नदीं ग्राहभुजङ्गसङ्कुलां

महोर्मिमालां मनसापि दुस्तराम् ।

भुजप्लवेनाशु गतार्थविक्लवो

वहामि सिद्धिं यदि दैवतं स्थितम् ॥

( तथा कृत्वा सविस्मयम् ) हन्त द्विधा छिन्नं जलम् । इतः स्थितम्, इतः प्रधावति । दत्तो मे भगवत्या मार्गः । यावदपक्रामामि । (अवतीर्य, निष्क्रान्तोऽस्मि यमुनायाः । अये हुङ्कारशब्द इव श्रूयते । व्यक्तं घोषसमीपे वर्तते मन्दभाग्यः । आ, अत्र च समीपघोषे मम वयस्यो नन्दगोपः प्रतिवसति । स खलु मया कंसाज्ञया निगडितः कशाभिर्हतश्च । यावत्प्रविशामि । अथवा रात्रौ वसुदेवः

प्रविष्ट इति शङ्किता गोपालका भविष्यन्ति। तस्मादिह न्यग्रोधपादपस्याधस्तात् प्रभातवेलां रजन्याः प्रतिपालयामि। भो भो न्यग्रोधदेवताः। यद्ययं बालो लोकहितार्थः कंस-वधार्थं वृष्णिकुले प्रसूतश्चेद् घोषात्कश्चिदिहागच्छतु। न, न, मम वयस्यो नन्दगोप एवागच्छतु।

( ततः प्रविशति दारिकां गृहीत्वा नन्दगोपः )

नन्दगोपः—( सशोकम् ) दारिके ! दारिके ! किमिदानीं न उज्झित्वा ननु गच्छसि। संप्रति हि महिषशतसंपातसदृशम् अहो बलवदन्धकारम्। अद्य ह्यर्धरात्रेऽस्माकं कुटुंबिन्या यशोदया प्रसूतेयं च दारी तपस्विनी जातमात्रैवापगतप्राणा संवृत्ता। श्वोऽस्माकं घोषस्योचित इन्द्रयज्ञो नामोत्सवो भविष्यति। तद् मा खल्वेतद् दुःखं गोपजनैरनुभूयतामिति मयैकाकिना निगडगुरुचरणेनेमां दारिकां गृहीत्वा निर्गतम्। यशोदापि तपस्विनी नैव जानाति दारिका वा दारिको वा प्रसूतः। दारिके, दारिके !

वसुदेवः—को न खल्वयं रात्रौ परिदेवयति। अस्मत्सब्रह्मचारी खल्वयं तपस्वी !

नन्दगोपः—किमिदानीं उज्झित्वा ननु गच्छसि।

वसुदेवः—स्वरेण प्रत्यभिजानामि। मम वयस्येन नन्दगोपेन भवितव्यम्। यावच्छब्दापयामि। वयस्य नन्दगोप ! इतस्तावत्।

नन्दगोपः—( सभयम् ) अयि भोः क इदानीं मां श्रुतपूर्वेण स्वरयोगेन नन्दगोप ! नन्दगोप ! इति शब्दायते। किं

नु राक्षसो वा, उत पिशाचो वा । ईदृश्यां प्रतिभयरजन्यां मृता दारिका मम हस्ते । किं नु खलु करिष्यामि ।

वसुदेवः—वयस्य नन्दगोप ! अलमन्यशङ्कया। इतस्तावत् ।

नन्दगोपः—( कर्णं दत्वा । सावधानम् ) अहो स्वरयोगेन भर्ता वसुदेव इति जानामि । यावदुपसर्पामि । अथवा तत्र मम किं कार्यम् । एतेन कंसस्य राज्ञो वचनं श्रुत्वापराद्धः कशाभिस्ताडयित्वा निगडैर्बद्धोऽस्मि । तत्र गमिष्यामि । अथवा धिक् खलु मे नृशंसभावम् । मम गुणसहस्रं कृतं, दुःखे दुःख्यति, सुखे सुखी भवति, तथापि स्मरामि राजशासनेन कृतमेकबन्धनम् । यावदुपसर्पामि । इयं दारी । किं करिष्यामि । भवत्वेवं तावत्करिष्यामि । प्रभाता रजनी । एष भर्ता वसुदेवो दारकं गृहीत्वा स्थितः । जयतु भर्त्ता जयतु ।

वसुदेवः—वयस्य नन्दगोप ! अपि भगवतीभ्यो गोभ्यः कुशलम् ।

नन्दगोपः—आम भर्त्तः कुशलम् ।

वसुदेवः—अथ भवतः परिजनस्य कुशलम् ।

नन्दगोपः—परिजनस्येति । आम भर्त्तः । कुशलम् ।

वसुदेवः—वयस्य किमिदानीं प्रच्छाद्यते ।

नन्दगोपः—भर्त्तः । नास्ति किञ्चित् ।

वसुदेवः—मम खलु प्राणैः शापितः स्याः यदि सत्यं न ब्रूयाः ।

नन्दगोपः—का गतिः । शृणोतु भर्ता । अद्यार्धरात्रेऽस्माकं कुटुम्बिन्या, नहि नहि, युष्माकं दास्या यशोदया प्रसूतेयं च दारी तपस्विनी जातमात्रैव अपगतप्राणा संवृत्ता । श्वोऽस्माकं घोषस्योचित इन्द्रयज्ञो नामोत्सवो भविष्यति ।

तद् मा खल्वेतद् दुःख गोपजनैरनुभूयतामिति मयैकाकिना विगडगुरुचरणेनेमां दारिकां गृहीत्वा निर्गतम् । यशोदापि तपस्विनी नैव जानाति दारको दारिका वा प्रसूता ।

वसुदेवः—हन्त भोः ! न शक्यं कृतान्तं वञ्चयितुम् । वयस्य काष्ठभूतं कलेवरं त्यज्यताम् ।

नन्दगोपः—न शक्नोमि भर्त्तः । न शक्नोमि ।

वसुदेवः—ईदृशो लोकधर्मः । त्यज्यताम् ।

नन्दगोपः—यद् भर्त्ताज्ञापयति । दारिके ! दारिके !

वसुदेवः—वयस्य ! अलमलं रुदितेन । उत्तिष्ठोत्तिष्ठ ।

नन्दगोपः—( तथाकृत्वोपगम्य ) जयतु भर्त्ता । अनेन दासजनेन किं कर्तव्यम् ।

वसुदेवः—वयस्य ननु त्वमपि जानासि दुरात्मना कंसेन मम षट् पुत्रा निधनमुपानीता इति ।

नन्दगोपः—जानामि भर्त्तः जानामि ।

वसुदेवः—तत् सप्तमोऽयं दीर्घायुः । नास्ति मम पुत्रेषु भाग्यम् । तव भाग्याज्जीवितुं गृह्यताम् ।

नन्दगोपः—बिभेमि भर्तः बिभेमि । यदि कंसो राजा शृणोति—वसुदेवस्य दारको नन्दगोपस्य हस्ते न्यासो निक्षिप्त इति, किं बहुना, गतमेव मे शीर्षम् ।

वसुदेवः—( आत्मगतम् ) हन्त विपन्नं कार्यम् । उक्तज्ञाः खलु नृशंसाः । तदेव कथयामि । ( प्रकाशम् ) वयस्य नन्दगोपः ।

यद्यस्ति भवतः किञ्चिन्मया पूर्वकृतं भवेत् ।
तस्य प्रत्युपकारस्य कालस्ते समुपागतः ॥

नन्दगोपः—किं किं प्रत्युपकार इति । यदि कंसो वा भवतु, कंसस्य पिता उग्रसेनो वा भवतु । आनयतु भर्ता दारकम् ।

वसुदेवः—वयस्य ! गृह्यताम् ।

नन्दगोपः—भर्तः अशौचितोऽस्मि । मृता दारिका गृहीता ।

वसुदेवः—वयस्य घोषवासात् प्रकृत्या शुचिरेव भवान् ।

नन्दगोपः—तेन ह्यस्माकं घोषस्योचितं पांसुना शौचं करोमि ।

वसुदेवः—कोऽत्र दोषः । क्रियतां शौचम् ।

नन्दगोपः—यद्भर्ताज्ञापयति । आश्चर्यमाश्चर्यं भर्तः । आश्चर्यम् । पांसून्मार्गयतो धरणीं भित्वा युगप्रमाणा सलिलधारा उत्थिता ।

वसुदेवः—बालस्यैव प्रभावः । क्रियतां शौचम् ।

नन्दगोपः—भर्तः । तथा । (तथा कृत्वोपसृत्य) भर्तः ! अयमस्मि ।

वसुदेवः—गृह्यताम् ।

नन्दगोपः—भर्तः अतिदुर्बलौ मे बाहू मन्दरसदृशं बालकं ग्रहीतुं न समर्थौ ।

वसुदेवः—वयस्य प्रभाता रजनी । गृह्यतां प्रतिनिवर्ततांश्च भवान् ।

नन्दगोपः—( गृहीत्वा )—आश्चर्यमाश्चर्यं भर्त्तः । आश्चर्यं । इमे बन्धने पतिते ।

वसुदेवः—सर्वमेतत्कुमारस्य प्रभावः । प्रतिनिवर्ततां भवान् । अथवा एहि तावत् ।

नन्दगोपः—भर्तः । अयमस्मि ।

वसुदेवः—कुमारस्य किं करिष्यति भवान् ।

नन्दगोपः—शृणोतु भर्ता एकस्मिन् गेहे गत्वा क्षीरं पिबति ।

अन्यस्मिन् गेहे गत्वा दधि भक्षयति । अपरस्मिन् गेहे गत्वा नवनीतं गिलति । अन्यस्मिन्गेहे गत्वा पायसं भुङ्क्ते । इतरस्मिन् गेहे तक्रघटं विलोडयति । किं बहुना, अस्माकं घोषस्य पतिर्भवति ।

वसुदेवः—एवमस्तु । प्रतिनिवर्ततां भवान् ।

---

## २५—तारकातिचारः

भवल्लब्धवरोदीर्णस्तारकाख्यो महासुरः ।
उपप्लवाय लोकानां धूमकेतुरिवोत्थितः ॥ १ ॥
पुरे तावन्तमेवास्य तनोति रविरातपम् ।
दीर्घिकाकमलोन्मेषो यावन्मात्रेण साध्यते ॥ २ ॥
सर्वाभिः सर्वदा चन्द्रस्तं कलाभिनिषेवते ।
नादत्ते केवलां लेखां हरचूडामणीकृताम् ॥ ३ ॥
व्यावृत्तगतिरुद्याने कुसुमस्तेयसाध्वसात् ।
न वाति वायुस्तत्पार्श्वे तालवृन्तानिलाधिकम् ॥४॥
पर्यायसेवामुत्सृज्य पुष्पसंभारतत्पराः ।
उद्यानपालसामान्यमृतवस्तमुपासते ॥ ५ ॥
तस्योपायनयोग्यानि रत्नानि सरितां पतिः ।
कथमप्यम्भसामन्तरानिष्पत्तेः प्रतीक्षते ॥ ६ ॥
ज्वलन्मणिशिखाश्चैनं वासुकिप्रमुखा निशि ।
स्थिरप्रदीपतामेत्य भुजंगाः पर्युपासते ॥ ७ ॥
तत्कृतानुग्रहापेक्षी तं मुहुर्दूतहारितैः ।
अनुकूलयतीन्द्रोऽपि कल्पद्रुमविभूषणैः ॥ ८ ॥

इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम् ।
शाम्येत्प्रत्यपकारेण नोपकारेण दुर्जनः ॥९॥
तेनामरवधूहस्तैः सदयालूनपल्लवाः ।
अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमाः ॥१०॥
वीज्यते स हि संसुप्तः श्वाससाधारणानिलैः ।
चामरैः सुरबन्दीनां वाष्पसीकरवर्षिभिः ॥११॥
उत्पाट्य मेरुशृङ्गाणि क्षुण्णानि हरितां खुरैः ।
आक्रीडपर्वतास्तेन कल्पिताः स्वेषु वेश्मसु ॥१२॥
मन्दाकिन्याः पयः शेषं दिग्वारणमदाविलम् ।
हेमाम्भोरुहसस्यानां तद्वाप्यो धाम साम्प्रतम् ॥१३॥
भुवनालोकनप्रीतिः स्वर्गिभिर्नानुभूयते ।
खिलीभूते विमानानां तदापातभयात्पथि ॥१४॥
यज्वभिः संभृतं हव्यं विततेष्वध्वरेषु सः ।
जातवेदोमुखान्मायी मिषतामाच्छिनत्ति नः ॥१५॥
उच्चैरुच्चैश्रवास्तेन हयरत्नमहारि च ।
देहबद्धमिवेन्द्रस्य चिरकालार्जितं यशः ॥१६॥
तस्मिन्नुपायाः सर्वे नः क्रूरे प्रतिहतक्रियाः ।
वीर्यवन्त्यौषधानीव विकारे सान्निपातिके ॥१७॥
जयाशा यत्र चास्माकं प्रतिघातोत्थितार्चिषा ।
हरिचक्रेण तेनास्य कण्ठे निष्कमिवार्पितम् ॥
तदीयास्तोयदेष्वद्य पुष्करावर्त्तकादिषु ।
अभ्यस्यन्ति तटाघातं निर्जितैरावता गजाः ॥

---

## २६—यथोत्तरं कृतिनां कृतकार्यता

यत्राब्यशास्त्रं भृगुरङ्गिरा वा न चक्रतुर्वैशकरावृषी तौ ।
तयोः सुतौ तौ च ससर्जतुस्तत्कालेन शुक्रश्च बृहस्पतिश्च ॥१॥
सारस्वतश्चापि जगाद नष्टं वेदं पुनर्यं ददृशुर्न पूर्वे ।
व्यासस्तथैनं बहुधा चकार न यं वसिष्ठः कृतवानशक्तिः ॥२॥
वाल्मीकिनादश्च ससर्ज पद्यं जग्रन्थ यन्न च्यवनो महर्षिः ।
चिकित्सितं यच्च चकार नात्रिः पश्चात्तदात्रेय ऋषिर्जगाद ॥३॥
यच्च द्विजत्वं कुशिको न लेभे तत्साधनं सूनु रवाप राजा ।
वेलां समुद्रे सगरश्च दध्रे नेक्ष्वाकवो यां प्रथमं बबन्धुः ॥४॥
आचार्यकं योगविधौ द्विजानामप्राप्तमन्यैर्जनको जगाम ।
ख्यातानि कर्माणि च यानि शौरेः शूरादयस्तेष्वबला बभूवुः॥५॥
तस्मात्प्रमाणं न वयो न कालः कश्चित्कविच्छ्रैष्ठ्यमुपैति लोके ।
राज्ञामृषीणां च हितानि तानि कृतानि पुत्रैरकृतानि पूर्वैः ॥६॥

---

## २७—किं शिवः पाञ्चसाहस्रिकः ?

ततः स यमुनां प्रणम्य मनस्येवं कथितवान् यद् भगवति कृष्णप्रिये यथा कालियसदनं प्रविश्यापि भगवान् कृष्णः काकोदरं निर्मथ्य निरगात् यथा च नन्दो ग्राहेण गृहीतस्त्वज्जले निमग्नोपि बकविद्वेषिणोऽनुग्रहेण सकुशलं परावृत्तस्तथैव चेदहमपि दिल्लीतः कुशलेन स्वपुण्यपुरीं परावर्ते, तद्दुग्धधारासहस्रैः कमलानां लक्षेण लक्षेण च घृतदीपानां त्वामभ्यर्चयिष्य इति ।

तावत्ते सेतुमुल्लङ्घ्य परं तटमायाता दिल्लीं प्रविविशुः । तत्र च

प्रघाणस्थैः परिवर्त्तितग्रीवैर्लोलोष्णीषबन्धैर्भटैः, आपणोपविष्टैः स्तब्धशङ्कुलैः स्वर्णकारैः, कर्णार्पितलेखनीकैश्चित्रकारैः, समुपेक्षित-तुलादण्डैर्वाणिजैः, विशिथिलस्खलितमानदण्डैः पटविक्रयिभिः, रुद्धसीवनैः स्यूतिकारैः, विस्मृतहारग्रन्थनैर्मालाकारैः, घण्टापथे विचरद्भिः समाकृष्टवल्गैः सादिभिः, आसादितप्रान्तैः पर्य्यटकैः, आशीर्वचनस्फुरितोष्ठैरिव ब्राह्मणैः, परिवर्जितक्रीडैर्बालकैः, गवाक्षस्थैः शिथिलितव्रीडैरङ्गुल्यग्रापसारिततिरस्करिणीविच्छेदप्रहित-कटाक्षावलोकनैः कुलयुवतिजनैश्च सकौतुकं निरीक्ष्यमाणः; कोऽयं, कुतोऽयं, सोऽयं, स एवायं, वीरोऽयं, वीरवरोऽयं, महाराष्ट्रराजोऽयं, दुर्धर्षोऽयं, चिरश्रुतोऽयं, शास्त्रिखानशास्तिज्ञोऽयं, विजयपुरविजयदीक्षितोऽयं, गोलखण्डखण्डनपण्डितोऽयं, अम्बरपुरन्दरप्रीतिपरवशोऽयं सम्राजमुपसर्पति, अम्बरराजकुमारेण सह नीयते; कीदृशमेतस्योष्णीषबन्धनम्, कीदृशा अस्य सादिनः, स भूषणकविरप्ययश्वारूढः सहचर इति परितः परिवर्तिनां बहूनां विविधालापान् मन्दमर्द्धोदीरितान् किञ्चित् किञ्चित् कर्णे कुर्वाणः; कैश्चित् कुक्कुटाण्डगणनासक्तैरपरैर्वर्त्तिकानिचयवशीकारव्याकुलमुष्टिभिरितरैर्मञ्चारूढैर्धूमपानपरायणैरपरैरक्षक्रीडासक्तैर्यवनैश्च सोऽयं, समागतोऽयं, समासादितोऽयं, पर्वतोन्दुरुमेनमेवाचष्ट सम्राट्; दृश्यतां किं भवति, सम्राट् कथमेतेन व्यवहरति, इति सक्रूरकटाक्षं कथाविषयीक्रियमाणः; उभयतः कांश्चित सझणत्कारं स्वापणे समुज्झितानां दीनाराणां गणनासक्तान्, अपरान् रत्ननिचयपरीक्षणप्रहितसूक्ष्मेक्षणान्, इतरान् अलङ्कारक्रयविक्रयव्यवहारसंसक्तान्, अन्यांश्च गवाक्षस्थगणिकागणभ्रूभङ्गनिहितदृष्टीन् वीक्षमाणः सपरिजनो महाराष्ट्रराजो

मार्गान्तरं प्राप्तः । तत्र प्रोच्चं मन्दिरमेकमासाद्य पृष्टवान् किमिद-मिति । कुमाररामसिंह उवाच—आर्य महामज्जितमिदं यत्र प्रति-शुक्रवारं यवना आगत्य इष्टमाराध्यन्ति ।

परतश्च कियन्तमध्वानमतिक्रम्य, सुदूरस्थं कैलासशिखर-खण्डाभं महाहर्म्यमेकं दृष्ट्वा यावत् पृच्छति महाराष्ट्रराजस्तावत् स्वयमेव कुमार उवाच यद् महाराज ज्यौतिषालयोऽयं मत्पित्रा प्रतिष्ठापितः । अस्मिन् बहूनि शास्त्रोक्तरीत्या निर्मितानि यन्त्राणि सन्ति यैर्ग्रहाणां गतयोऽनायासेन निश्चीयन्ते । अथ स उवाच—कथं न स्यादीदृश एव ज्यौतिषशास्त्रपारंगतो भारतभूषणं तत्र-भवान् जयपुराधीशः ।

ततः पुरतो गच्छन्तः क्षणेन राजद्वारं प्राप्ताः । तत्र कोऽय-मिति रोद्धुमुत्सुकाः प्रतीहाराः कुमाररामसिंहेन किमप्युक्त्वा एकेन हस्तेन प्रणम्य बद्धपङ्क्तय एकतः स्थिताः । एते चान्तः प्रविश्य अतिप्रशस्तं स्थानमेकं प्राप्ताः । कुमारसम्मत्या तत्रैव यानमुन्मुच्य प्रचलिताः । गौरसिंहो माल्यश्रीको भूषणश्च स्व-सैन्धवांस्त्यक्त्वाऽनुसृताः । तदवलोक्य कुमाररामसिंहेनोक्तम् किं भवन्तोऽपि ? अथवा अस्तु, सुवर्णदण्डधारिणां निकटे स्थास्यते भवद्भिः । एवं तस्यां कक्षायां बहून् पुष्परथान् वाजिनो गजान् क्रमेलकांश्चावलोकयन्तः विधिमण्डलेश्वरयातायतसङ्कुलं मार्ग-माश्रित्य द्वितीयं द्वारमायाताः । तत्प्रतीहारा अपि कुमारेण किमपि दत्तेङ्गिता मार्गं ददुः । तदन्तः प्रविश्य पुनरेकं प्रशस्तं प्राङ्गणं प्राप्य महाराष्ट्रराजोऽवालोकयद् यद् मध्ये विशालमजिरं, परितश्च सार्द्धहस्तद्वयोच्छ्राया वेदिका, ततश्च परं सकाचपट्टिकहरितकपि-शश्यामलादिरञ्जितकपाटानि कोष्ठानि सन्ति । वेदिकाया उपरि

चैकतः सौवर्ण्यो दन्तावलग्रैवेयकघण्टा निर्मीयन्ते, परतः पाटीर-स्कन्धनिर्मितेषु कवाटेषु रत्नकुसुमानि विरच्यन्ते, अन्यतः सैन्धव-शृङ्गाराय स्थूलमौक्तिकानां हारा गुम्फ्यन्ते, इतरतः कौशेयास्त-रणानां प्रान्तेषु सौवर्णसूत्रप्रततयः सीव्यन्ते, ततो राजतच्छत्राणां परिधिषु हीरकजालानि योज्यन्ते, इतश्च हाटकमञ्चानां दण्डेषु मरकतकुसुमानि निर्मीयन्ते। एवं विचित्रं वैभवं विलोकयन्तः सर्वे तृतीयं राजद्वारमागताः। तत्प्रवेशसमये कुमारेण कथितम्। कक्षायामस्यां सर्वैर्मौनेन गन्तव्यम्। पादक्षेपोऽपि निःशब्द एव विधेयः। ततस्तथैव तदपि द्वारं प्रविश्यावलोकितं यत्, पन्था-नमुभयतः पदे पदे सौवर्णराजतादिपञ्जरस्थाः पुंस्कोकिलाः, कीराः, सारिकाः, कलविङ्का लावाश्चकोराश्चातका अन्ये च बहवो विविध-वर्णाश्चपलितचञ्चवः पक्षतिकण्डूयनमनोहराः पुच्छप्रसारणसङ्को-चनचञ्चला वीणारणनस्पर्द्धिकूजिताः दाडिमद्राक्षाखण्डत्रोटनतत्प-रत्रोटयः आरोहमारोहं शलाकोपवेशनिका आन्दोलमान्दोलं च पुनरधः प्रपतन्तः पक्षिणः समुल्लसन्तीति। पार्श्वद्वयेऽपि सौरभ-पटलव्याप्तदिगन्तरमुद्यानं तदन्तस्थकुञ्जेषु च क्वचित्क्वचिद्वीणा-वादः। सम्मुखमेव सुदूरं महान् प्रासादस्तत्संलग्नैव महती हस्त-त्रयोच्छ्राया वेदिका तदुपरि तादृशमेव वेदिकान्तरं तस्यापि च उपरि सौवर्णं महासिंहासनं तदेवाध्युषितो भारतसम्राट् दृष्टः। कुमारेङ्गितेन निपुणं निरीक्ष्य चावगतं यत् प्रथममहावेदिकायां बहवः कलितकनकदण्डाः करवालाकलितकटिप्रदेशा अनुचरा बद्धाञ्जलयो बद्धपङ्क्तय उत्थितास्तिष्ठन्ति द्वितीयवेदिकायाञ्च सौवर्णदण्डभित्तिकादत्तहस्ताः मण्डलेश्वराः सेनापतयश्च उत्थिता एव तिष्ठन्ति। महाराष्ट्रपतिना कर्णे पृष्टं किं सभायां केनाऽपि-

नोपविश्यते। कुमार उक्तवान् राजकार्यसम्बन्धिनीषु सभासु न केनाप्युपविश्यते ऋते सम्राजः, गानवाद्यादिसमितिषु च कृपापात्राण्युपविशन्त्यपि।

एवं मन्दमालपन्त एव ते वेदिसमीपमायाताः राङ्कवास्तरणाच्छन्नानि सोपानान्याक्रम्य प्रथमवेदिकामारूढास्तत्रैव कुमारेणेङ्गितो माल्यश्रीको गौरसिंहो भूषणश्च बद्धाञ्जलीनामन्येषां पङ्क्तिं भेजिरे। महाराष्ट्रेश्वरस्तु कुमारेण सह द्वितीयां वेदिमारूढ एव दक्षहस्तेन सम्राजं प्रणनाम कुमारदर्शितेन पथा च समीपमागत्य महामूल्यां मुद्रिकामेकां निजाञ्जलौ संस्थाप्य हस्तौ प्रसारितवान्। ततोऽन्यतः क्षिप्रेक्षणे सम्राजि समीपवर्तिषु कश्चन समचकथत् जगत्पालकानां करुणावलोकनं सभाजयति महाराष्ट्रदेशीयः कश्चित् शिववीरः इति। अथ दृष्टिं परिवर्त्य वाचंयम एव स्वहस्तेन मुद्रिकां जग्राह दिल्लीश्वरः पाञ्चसाहस्रिकैश्च सेनापतिभिः सह उपस्थातुं मन्दमुक्तवान्। तदाकर्ण्य किरातरसमिव पिबन् महाराष्ट्रराजः सकष्टं ततो बभ्राम कुमाराननदत्तदृष्टिश्च मन्दमुक्तवान् "किं शिवः पाञ्चसाहस्रिकः" ?

---

## २८—दैवगर्हा

आलस्यं यदि न भवेज्जगत्यनर्थः
को न स्याद् बहुधनको बहुश्रुतो वा।
आलस्यादियमवनिः ससागरान्ता
संपूर्णा नरपशुभिश्च निर्धनैश्च ॥१

दुःखाद् यथा दुःखकाले हा कष्टमिति कथ्यते ।
हाकष्टशब्दपर्यायस्तथा हा दैवमित्यपि ॥१॥
प्राक्स्वकर्मेतराकारं दैवं नाम न विद्यते ।
बालः प्रबलपुंसेव तज्जेतुमिह शक्यते ॥२॥
ह्यस्तनो दुष्ट आचार आचारेणाद्य चारुणा ।
यथाशु शुभतामेति प्राक्तनं कर्म तत्तथा ॥४॥
शक्तस्य पौरुषं दृश्यमदृश्यं वापि यद्भवेत् ।
तद्दैवमित्यशक्तेन बुद्धमात्मन्यबुद्धिना ॥५॥
कश्चिन्मां प्रेरयत्येवमित्यनर्थकुकल्पने ।
यः स्थितो दृष्टमुत्सृज्य त्याज्योऽसौ दूरतोऽधमः ॥६॥

सकलकारणकार्यविवर्जितं
निजविकल्पबलादुपकल्पितम् ।
तदनपेक्ष्य हि दैवमसन्मयं
श्रय शुभाशय पौरुषमात्मनः ॥७॥

ये समुद्योगमुत्सृज्य स्थिता दैवपरायणाः ।
ते धर्ममर्थं कामं च नाशयन्त्यात्मविद्विषः ॥८॥
दैन्यदारिद्र्यदुःखार्त्ता अपि साधो नरोत्तमाः ।
पौरुषेणैव यत्नेन याता देवेन्द्रतुल्यताम् ॥९॥
यथा यथा प्रयत्नो मे फलमाशु तथा तथा ।
इत्यहं पौरुषादेव फलभाङ् न तु दैवतः ॥१०॥
पौरुषाद्दृश्यते सिद्धिः पौरुषाद् धीमतां क्रमः ।
दैवमाश्वासनामात्रं दुःखे पेलवबुद्धिषु ॥११॥
भोक्ता तृप्यति नाभोक्ता गन्ता गच्छति नागतिः ।
वक्ता वक्ति न चावक्ता पौरुषं सफलं नृणाम् ॥१२॥

यो यो यथा प्रयतते स स तत्तत्फलैकभाक् ।
न तु तूष्णीं स्थितेनेह केनचित् प्राप्यते फलम् ॥१३॥
शुभेन पुरुषार्थेन शुभमासाद्यते फलम् ।
अशुभेनाशुभं राम यथेच्छसि तथा कुरु ॥१४॥
पुरुषो जायते लोके वर्धते जीर्यते पुनः ।
न तत्र दृश्यते दैवं जरायौवनबाल्यवत् ॥१५॥
नाकृतिर्नैव कर्माणि न स्पन्दो न पराक्रमः ।
तन्मिथ्याज्ञानवद् रूढं दैवं नाम किमुच्यते ॥१६॥
मूढानुमानसंसिद्धं दैवं यस्यास्ति दुर्मतेः ।
दैवाद्दाहोऽस्ति नैवेति गन्तव्यं तेन पावके ॥१७॥
न च निस्पन्दता लोके दृष्टेह शवतां विना ।
स्पन्दाच्च फलसंप्राप्तिस्तस्माद्दैवं निरर्थकम् ॥१८॥
विनियोक्त्रथ भूतानामस्त्यन्यच्चेज्जगत्त्रये ।
शेरतां भूतवृन्दानि दैवं सर्वं करिष्यति ॥१९॥
कालविद्भिर्विनिर्णीता यस्यातिचिरजीविता ।
स चेज्जीवति संछिन्नशिरास्तद्दैवमुत्तमम् ॥२१॥
कालविद्भिर्विनिर्णीतं पाण्डित्यं यस्य राघव ।
अनध्यापित एवासौ तज्ज्ञश्चेद्दैवमुत्तमम् ॥२१॥
दैवं न किञ्चित्कुरुते न भुङ्क्ते न च विद्यते ।
न दृश्यते नाद्रियते केवलं कल्पनेदृशी ॥२२॥
इत्थं ममाभवद् बुद्धिरित्थं मे निश्चयो ह्यभूत् ।
इति कर्मफलप्राप्तौ योक्तिस्तद्दैवमुच्यते ॥२३॥
शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् ।
पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥२४॥

दैवपौरुषविचारचारुभि-
श्चेदमाचरितमात्मपौरुषम् ।
नित्यमेव जयतीति भावितैः
कार्य आर्यजनसेवयोद्यमः ॥२५॥

---

## २१—दश कुमाराः

अस्ति समस्तनगरीनिकषायमाणा मगधदेशशेखरीभूता पुष्पपुरी नाम नगरी । तत्र कीर्त्योऽभितः सुरभितः प्रतापेन सतततुलितवियन्मध्यहंसो राजहंसो नाम निरवद्यरूपो भूपो बभूव । तस्य वसुमती नाम सुमती लीलावतीकुलशेखरमणी रमणी बभूव । विजितामरपुरे पुष्पपुरे निवसता साऽनन्तभोगलालिता वसुमती वसुमतीव मगधराजेन यथासुखमन्वभावि ।

तस्य राज्ञः परमविधेया धर्मपालपद्मोद्भवसितवर्मनामधेया कुलामात्यास्त्रयोऽभूवन् । तेषां सितवर्मणः सुमतिसत्यवर्माणौ, धर्मपालस्य सुमन्त्रसुमित्रकामपालाः, पद्मोद्भवस्य सुश्रुतरत्नोद्भवाविति तनयाः समभूवन् । तेषु धर्मशीलः सत्यवर्मा संसारासारतां बुद्ध्वा तीर्थयात्राभिलाषो देशान्तरमगमत् । विटनटवारनारीपरायणो दुर्विनीतः कामपालो जनकाग्रजन्मनोः शासनमतिक्रम्य भुवं बभ्राम । रत्नोद्भवोऽपि वाणिज्यनिपुणतया पारावारतरणमकरोत् । इतरे मन्त्रिसूनवः पुरंदरपुरातिथिषु पितृषु यथापूर्वमन्वतिष्ठन् ।

ततः कदाचित् मगधनायको मालवेश्वरं समुत्कटमानसारं मानसारं प्रति चतुरङ्गबलेन संयुतः संग्रामाभिलाषेण रोषेण महता-

विष्टो निर्ययौ। मालवनाथोऽप्यनेकानेकपयूथसनाथो विग्रहः सविग्रह इव साग्रहोऽभिमुखीभूय भूयो निर्जगाम। रयोरथ पटहध्वानबधिरिताशेषदिगन्तरालं शस्त्राशस्त्रि हस्ताहस्ति परस्पराभिहतसैन्यं जन्यमजनि। तत्र मगधराजः प्रक्षीणसकलसैन्यमण्डलं मालवराजं जीवग्राहमभिगृह्य कृपालुतया पुनरपि स्वराज्ये प्रतिष्ठापयामास।

ततः स रत्नाकरमेखलामिलामनन्यशासनां शासदनपत्यतया नारायणं सकललोकैककारणं निरन्तरमर्चयामास। अथ कदाचित्तदग्रमहिषी देवी 'देवेन कल्पवल्लीफलमाप्नुहि' इति प्रभातसमये सुस्वप्नमवलोकितवती। सा तदा दयितमनोरथपुष्पभूतं गर्भमधत्त। राजापि सुहृन्नृपमण्डलं समाहूय निजसंपन्मनोरथानुरूपं देव्याः सीमन्तोत्सवं व्यधत्त। एकदा हितैः सुहृन्मन्त्रिपुरोहितैः सभायां सिंहासनासीनो गुणैरहीनो ललाटतटन्यस्ताञ्जलिना द्वारपालेन व्यज्ञापि—'देव, देवसंदर्शनलालसमानसः कोऽपि देवेन विरच्यार्चनार्हो यतिर्द्वारदेशमध्यास्ते' इति। तदनुज्ञातेन तेन स संयमी नृपसमीपमनायि। भूपतिरायान्तं तं विलोक्य सम्यग्ज्ञाततदीयगूढचारभावो निखिलमनुचरनिकरं विसृज्य मन्त्रिजनसमेतः प्रणतमेनं मन्दहासमभाषत—'ननु तापस, देशं सापदेशं भ्रमन्भवांस्तत्रतत्र भवदभिज्ञातं कथयतु' इति। तेनाभाषि प्राञ्जलिना—'देव, शिरसि देवस्याज्ञामादायैनं निर्दोषं वेषं स्वीकृत्य मालवेन्द्रनगरं प्रविश्य तत्र गूढतरं वर्तमानस्य राज्ञः समस्तमुदन्तजातं विदित्वा प्रत्यागमम्। मानी मानसारः संपराये भवतः पराजयमनुभूय वैलक्ष्यलक्ष्यहृदयो वीतदयो महाकालनिवासिनं महेश्वरं समाराध्य तपःप्रभावसंतुष्टादस्माद्भयदां गदां लब्ध्वात्मानमप्रतिभटं मन्यमानो महाभिमानो भवन्तमभियोक्तुमुद्युङ्क्ते। ततः परं देव एव

प्रमाणम्' इति। तदालोच्य निश्चिततत्कृत्यैरमात्यै राजा विज्ञापितोऽभूत् 'देव, निरुपायेन देवसहायेन योद्धुमरातिरायाति। तस्मादस्माकं युद्धं सांप्रतमसाम्प्रतम्। सहसा दुर्गसंश्रयः कार्यः' इति। तैर्बहुधा विज्ञापितोऽप्यखर्वेण गर्वेण विराजमानो राजा तद्वाक्यमनादृत्य प्रतियोद्धुमना बभूव। मानसारोऽपारसामग्रीसमेतोऽक्लेशं मगधदेशं प्रविवेश। तदा तदाकर्ण्य मन्त्रिणो भूमहेन्द्रं मगधेन्द्रं कथंचिदनुनीय रिपुभिरसाध्ये विन्ध्याटवीमध्येऽवरोधान्मूलबलरक्षितान्निवेशयामासुः। राजहंसस्तु तीव्रगत्या निर्गत्याधिकरुषं द्विषं रुरोध। जयाकांक्षी मालवदेशरक्षी तस्योपरि पुरारातिदत्तां गदां प्राहिणोत्। सा च सूतं निहत्य रथस्थं राजानं मूर्च्छितमकार्षीत्। ततो वीतप्रग्रहा अक्षतविग्रहा वाहा रथमादाय दैवगत्यान्तःपुरशरण्यं महारण्यं प्राविशन्। मालवनाथो जयलक्ष्मीसनाथो मगधराज्यं समाक्रम्य पुष्पपुरमध्यतिष्ठत्।

तत्रामात्याः राजानं समन्तादन्वीक्ष्यानवलोकितवन्तो दैन्यवन्तो देवीमवापुः। वसुमती तु तेभ्यो निखिलसैन्यक्षतिं राज्ञोऽदृश्यत्वं चाकर्ण्योद्विग्ना शोकसागरमग्ना रमणानुगमने मतिं व्यधत्त। "कल्याणि भूरमणमरणमनिश्चितम्। किं च दैवज्ञकथितो मथितोद्धतारातिः सार्वभौमोऽभिरामो भविता सुकुमारः कुमारस्त्वदुदरे वसति। तस्मादद्य तव मरणमनुचितम्" इति भूषितभाषितैरमात्यपुरोहितैरनुनीयमानया तया क्षणं क्षणहीनया तूष्णीमस्थायि। अथार्धरात्रे सेनानिवेशदेशं शनैरतिक्रम्य निकटवटतरोः शाखायां क्वचिदुत्तरीयार्धेन बन्धनं विरचय्य मर्तुकामाभिरामा साश्रुकण्ठा व्यलपत्—'लावण्योपमितपुष्पसायक भूनायक भवानेव भाविन्यपि जन्मनि वल्लभो भवतु' इति। तदाकर्ण्य मागधोऽगाधरुधिर-

चिरक्षरणनष्टचेष्टो देवीवाक्यमिव निश्चिन्वानस्तन्वानः प्रियवचनानि शनैस्तामाह्वयत्। सा ससंभ्रममागत्य पुरोहितामात्यजनमुच्चैराहूय तेभ्यस्तमदर्शयत्। राजा प्रशंसितदैवमाहात्म्यैः तैरमात्यैरभाणि 'देव रथ्यचयः सारथ्यपगमे रथं रभसादरण्यमनयत्' इति। 'तत्र संग्रामे मालवपतिना प्रहितया गदया दयाहीनेन ताडितो मूर्च्छामागत्यात्र वने निशान्तपवनेन बोधितोऽभवम्' इति महीपतिरकथयत्। ततो राजा शिबिरमानीय तैः विरोपितव्रणोऽकारि। मृदुभाषितया वसुमत्या च समबोधि—'देव, संपत्तडिल्लतेव सहसैवोदेति नश्यति च। तन्निखिलं दैवायत्तमेवावधार्य कार्यम्। किं च पुरा हरिश्चन्द्ररामचन्द्रमुख्या असंख्या महीन्द्रा दैवतन्त्रं दुःखयन्त्रं सम्यगनुभूय पश्चादनेककालं निजराज्यमकुर्वन्। तद्वदेव भवान्भविष्यति। कंचन कालं विरचितदैवसमाधिस्तिष्ठतु तावदिति।

ततः सकलसैन्यसमन्वितो राजहंसस्तपोविभ्राजमानं वामदेवनामानं तपोधनं निजाभिलाषावाप्तिसाधनं जगाम। तं प्रणम्य तेन कृतातिथ्यस्तस्मै कथितकथ्यस्तदाश्रमे कंचन कालमुषित्वा निजराज्याभिलाषी मितभाषो सोमकुलावतंसो राजहंसो मुनिमभाषत—'भगवन्' मानसारः प्रबलेन दैवबलेन मां निर्जित्य मद्भोग्यं राज्यमनुभवति। तद्वदहमप्युग्रं तपो विरचय्य तमरातिमुन्मूलयिष्यामीति नियमवन्तं भवन्तं प्राप्नवम्। ततस्त्रिकालज्ञो तपोधनो राजानमवोचत्—'सखे शरीरकार्श्यकारिणा तपसाऽलम्। वसुमतीगर्भस्थो राजनन्दनो सकलरिपुकुलमर्दनो नूनं संभविष्यति। कंचन कालं तूष्णीमास्स्वेति। राजापि मुनिवाक्यमङ्गीकृत्यातिष्ठत्।

ततः संपूर्णगर्भदिवसा वसुमती सुमुहूर्ते सकललक्षणलक्षितं सूतमसूत। पुरोधसं पुरस्कृत्य कृत्यविन्महीपतिः कुमारं सुकुमारं जातसंस्कारेण विराजमानं राजवाहननामानं व्यधत्त। तस्मिन्नेव काले सुमतिसुमन्त्रसुमित्रसुश्रुतानां मन्त्रिणां प्रमतिमित्रगुप्तमन्त्रगुप्तविश्रुताख्या महदभिख्याः सूनवः समजायन्त। राजवाहनो मन्त्रिपुत्रैरात्ममित्रैः सह बालकेलीरनुभवन्नवर्धत।

अथ कदाचिदेकेन तापसेन रसेन राजलक्षणविराजितं कंचिन्नयनानन्दकरं सुकुमारं कुमारं राज्ञे समर्प्योवोचि—'भूवल्लभ, कुशसमिदानयनाय वनं गतेन मया काचिदशरण्या व्यक्तकार्पण्या अश्रु मुञ्चन्ती वनिता विलोकिता। 'निर्जने वने किन्निमित्तं रुद्यते त्वयेति पृष्टा सा करसरोरुहैरश्रु प्रमृज्य सगद्गदं मामवोचत्। 'मुने, मिथिलानायके निजसुहृदो मगधराजस्य सीमन्तिनीसीमन्तमहोत्सवाय पुत्रदारसमन्विते पुष्पपुरमुपेत्य कंचन कालमधिवसति मालवेशो मगधराजं योद्धुमगात्। तत्र सुहृत्साहाय्यकं कुर्वाणो विदेहेश्वरः प्रहारवर्म्मा जयवता रिपुणाभिगृह्य कारुण्येन पुण्येन विसृष्टो हतावशेषेण सैन्येन स्वपुरगमनमकरोत्। ततो वनमार्गेण गच्छन्नधिकबलेन शबरबलेन रभसादभिहन्यमानः स पलायिष्ट। तदीयार्भकयोर्यमयोर्धात्रीभावेन परिकल्पिताऽहं मद्दुहितापि तीव्रगतिं भूपतिमनुगन्तुमक्षमे अभूव। तत्र विवृतवदनः कोऽपि व्याघ्रः मामाघ्रातुमागतवान्। भीताहमुदग्रग्राविणि स्खलन्ती पर्यपतम्। मदीयपाणिभ्रष्टो बालकः कस्यापि कपिलाशवस्य क्रोडमभ्यलीयत। तच्छवाकर्षिणो व्याघ्रस्य प्राणान्बाणो बाणासनयंत्रमुक्तोऽपाहरत्। विलोलालको बालकोऽपि शबरैरादाय कुत्रचिदुपानीयत। कुमारमपरमुद्वहन्ती मद्दुहिता कुत्र गता न जाने।

साहं मोहं गता केनापि कृपालुना वृष्णिपालेन स्वकुटीरमावेश्य विरोपितव्रणाऽभवम्। ततः स्वस्थीभूय भूयः क्ष्माभर्तुरन्तिकमुपतिष्ठासुरसहायतया दुहितुरनभिज्ञाततया च व्याकुलीभवामि' इत्यभिदधाना एकाकिन्यपि स्वामिनं गमिष्यामीति सा तदैव निरगात्। अहमपि भवन्मित्रस्य विदेहनाथस्य विपन्निमित्तं विषादमनुभवंस्तदन्वयाङ्कुरं कुमारमन्विष्यंस्तदेकं चण्डिकामन्दिरं सुन्दरं प्रागाम्। तत्र विजयसिद्धये कुमारं देवतोपहारं करिष्यतः किराता मया समभ्यभाष्यन्त—'ननु किरातोत्तमाः, घोरप्रचारे कान्तारे स्खलितपथः स्थविरभूसुरोऽहं मम पुत्रकं कचिच्छायायां निक्षिप्य मार्गान्वेषणाय किंचिदन्तरमगच्छम्। स कुत्र गतः, केन वा गृहीतः, परीक्ष्यापि न वीक्ष्यते। तन्मुखावलोकनेन विनानेकान्यहान्यतीतानि। किं करोमि, क्व यामि, भवद्भिर्न किमदर्शि' इति। द्विजोत्तम, कश्चिदत्र तिष्ठति। किमेष तव नन्दनः सत्यमेव। तदेनं गृहाणेत्युक्त्वा दैवानुकूल्येन मह्यं तं व्यतरन्। तेभ्यो दत्ताशीरहं बालमङ्गीकृत्य भवदङ्कं समानीतवानस्मि। एवमायुष्मन्तं पितृरूपो भवानभिरक्षतादिति। राजा तमुपहारवर्मनाम्नाहूय राजवाहनमिव पुपोष।

जनपतिरेकस्मिन्पुण्यदिवसे तीर्थस्नानाय पक्कणनिकटमार्गेण गच्छन्नबलया कयाचिदुपलालितमनुपमशरीरं कुमारं कंचिदवलोक्य कुतूहलाकुलस्तामपृच्छत्—'भामिनि रुचिरमूर्तिरसावर्भको भवदन्वयसंभवो न भवति। कस्य नयनानन्दः, निमित्तेन केन भवदधीनो जातः, कथ्यतां याथातथ्येन त्वयेति। प्रणतया तया शबर्या सलीलमलापि—'राजन्, आत्मपल्लीसमीपे मिथिलेश्वरस्य सर्वस्वमपहरति शबरसैन्ये मद्दयितेनापहृत्य कुमार एष मह्यमर्पितो व्यव-

र्धत'। तदवधार्य कार्यज्ञो राजा मुनिकथितं द्वितीयं राजकुमारमेव निश्चित्य सामदानाभ्यां तामनुनीयापहारवर्मेत्याख्याय देव्यै 'वर्धय' इति समर्पितवान्।

कदाचिद्वामदेवशिष्यः सोमदेवशर्मा नाम कंचिदेकं बालकं राज्ञः पुरो निक्षिप्याभाषत—'देव रामतीर्थे स्नात्वा प्रत्यागच्छता मया काननावनौ वनितया कयापि धार्यमाणमेनमुज्ज्वलाकारं कुमारं विलोक्य सादरमभाणि—'स्थविरे, का त्वम्। एतस्मिन्नटवी-मध्ये बालकमुद्वहन्ती किमर्थमायासेन भ्रमसि' इति। वृद्धयाप्य-भाषि—'मुनिवर, कालयवननाम्नि द्वीपे कालगुप्तो नाम धनाढ्यो वैश्यवरः कश्चिदस्ति। तन्नन्दिनीं नयनानन्दकारिणीं सुवृत्तां नामै-तस्माद्वीपादागतो मगधनाथमन्त्रिसंभवो रत्नोद्भवो नाम मनोहारी व्यवहार्युपयम्य सुवस्तुसंपदा श्वशुरेण संभानितोऽभूत्। कालक्रमेण नताङ्गी गर्भिणी जाता। ततः सोदरविलोकनकुतूहलेन रत्नोद्भवः कथंचिच्छ्वशुरमनुनीय चपललोचनयानया सह प्रवहणमारुह्य पुष्प-पुरमभिप्रस्तस्थे। कल्लोलमालिकाभिहतः पोतः समुद्राम्भस्यमज्जत्। गर्भभरालसां तां ललनां धात्रीभावेन कल्पिताहं कराभ्यामुद्वहन्ती फलमेकमधिरुह्य दैवगत्या तीरभूमिगममम्। रत्नोद्भवस्तत्र निमग्नो वा केनोपायेन तीरमगमद्वा न जानामि। क्लेशस्य परां काष्ठामधिगता सुवृत्ता अस्मिन्नटवीमध्येऽद्य सूतमसूत। प्रसववेदनया विचेतना सा प्रच्छायशीतले तरुतले निवसति। विजने वने स्थातुमशक्यतया जनपदगामिनं मार्गमन्वेष्टुमुद्युक्तया मया विवशायास्तस्याः समीपे बालकं निक्षिप्य गन्तुमनुचितमिति कुमारोऽनायि इति। तस्मि-न्नेव क्षणे वन्यो वारणः कश्चिददृश्यत। तं विलोक्य भीता सा बालकं निपात्य प्राद्रवत्। अहन्तु तं निपतितं बालकमुत्थाप्य भव-

निकटमानीतवानस्मि' इति। राजा रत्नोद्भवः कथमभवदिति चिन्तयंस्तन्नन्दनं पुष्पोद्भवनामधेयं विधाय सुश्रुताय तदनुजतनयं समर्पितवान्।

अन्येद्युः कंचन बालकमुरसि दधती वसुमती वल्लभमभिगता। तेन कुत्रत्योऽयमिति पृष्टा समभाषत—'राजन्, अतीतायां रात्रौ काचन दिव्यवनिता मत्पुरतः कुमारमेकं संस्थाप्य निद्रामुद्रितां मां विबोध्य विनीताब्रवीत्—'देवि, त्वन्मन्त्रिणो धर्मपालनन्दनस्य कामपालस्य वल्लभा यक्षकन्याऽहं तारावली नाम, नन्दिनी मणिभद्रस्य। यक्षेश्वरानुमत्या मदात्मजमेतं भवत्तनूजस्य भाविनो विशुद्धयशोनिधे राजवाहनस्य परिचर्याकरणायानीतवत्यस्मि। त्वमेनं मनोजसंनिभमभिवर्धयेति। विस्मयविकसितनयना मया सविनयं सत्कृता यक्षी साप्यदृश्यतामयासीत्' इति। कामपालस्य यक्षकन्यासम्बन्धे विस्मयमानमानसो राजहंसो सुमित्रं मन्त्रिणमाहूय तदीयभ्रातृपुत्रमर्थपालं विधाय तस्मै सर्वं वार्तादिकं व्याख्यायादात्।

ततः परस्मिन्दिवसे वामदेवान्तेवासी कुसुमसुकुमारं कुमारमेकमवगमय्य नरपतिमवादीत्—'देव, तीर्थयात्राप्रसङ्गेन कावेरीतीरमागतोऽहं विलोलालकं बालकं निजोत्सङ्गतले निधाय रुदतीं स्थविरामेकां विलोक्यावोचम्—'स्थविरे, का त्वम् अयमर्भकः कस्य नयनानन्दकरः, कान्तारं किमर्थमागता, शोककारणं किम्। सा करयुगेन वाष्पजलमुन्मृज्य शोकहेतुमवोचत्—द्विजात्मज, राजहंसमन्त्रिणः सितवर्मणः कनीयानात्मजः सत्यवर्मा तीर्थयात्राभिलाषेण देशमेनमागच्छत्। स कस्मिंश्चिदग्रहारे कालीं नाम कस्यचिद्भूसुरस्य नन्दिनीं विवाह्य तस्या अनपत्यतया गौरीं नाम

तद्भगिनीं काञ्चनकान्तिं परिणीय तस्यामेकं तनयमलभत। काली सासूयमेकदा धात्र्या मया सह बालमेनमेकेन मिषेणानीय तटिन्यामस्यामक्षिपत्। करेणैकेन बालमुद्धृत्यापरेण प्लवमाना नदीवेगागतस्य कस्यचित्तरोः शाखामवलम्ब्य तत्र शिशुं निधाय नदीवेगेनोह्यमानाहं केनचित्कालभोगिना अदंशि। मदवलम्बीभूतो भूरुहोऽयमत्र तीरमगमत्। मयि मृतायामरण्ये कश्चन शरण्यो नास्तीति मया शोच्यत इति। ततो विषमविषज्वालावलीढावयवा सा धरणीतले न्यपतत्। दयाविष्टहृदयोऽहं समीपकुञ्जेषु ओषधिविशेषमन्विष्य प्रत्यागतो मृतां तां व्यलोकयम्। तदनु तस्याः पावकसंस्कारं विरचय्य शोकाकुलचेता भवदमात्यतनयस्य भवानेवाभिरक्षितेति भवन्तमेनमनयमिति। तन्निशम्य खिन्नमानसो नरपतिः सुमतये मन्त्रिणे सोमदत्तं नाम तदनुजतनयमर्पितवान्।

एवं मिलितेन कुमारमण्डलेन बालकेलीरनुभवन्नधिरूढानेकवाहनो राजवाहनोऽनुक्रमेण चौलोपनयनादिसंस्कारजातमलभत। ततः सकललिपिज्ञानं निखिलदेशीयभाषापाण्डित्यं षडङ्गसहितवेदसमुदायकोविदत्वं चाध्यगच्छत्।

---

## ३०—सीतापरित्यागः।

लक्ष्मणः—इत इतोऽवतरत्वार्या। एतानि गहनतरुलताप्रतानसंरुद्धतया रथप्रवेशायोग्यानि भागीरथीतीरकाननानि। तदवतरत्वार्या।

सीता—वत्स, लक्ष्मण, तुरंगमवेगकम्पितदेहा अत्र न पारयामि संस्थातुं, किं पुनरवतरितुम्।

लक्ष्मणः—सुमन्त्र, ननु तुरंगमनियमने क्रियतां यत्नः ।

सुमन्त्रः—क्रियमाणमपि यत्नमतिवर्तन्ते गान्धर्वप्रिया वाजिनः ।

तथाहि—

अमी पतद्भिः श्रवणेष्वमन्द्रं विकृष्यमाणाः कलहंसनादैः ।
अनाश्रवाः प्रग्रहसंयमस्य तुरंगमास्तूर्णतरं प्रयान्ति ॥

लक्ष्मणः—सुमन्त्र, अतिरभसप्रवृत्तवेगत्वादनालक्षितसमविषमास्तुरंगमा गंगाप्रपाते स्यन्दनं विनिपातयन्ति, तत् सर्वात्मना क्रियतां यत्नः ।

सुमन्त्रः—( रज्ज्वाकर्षणमभिनयति )

लक्ष्मणः—एष स्थितो रथः, तदवतरतु देवी ।

सीता—( अवतीर्य परिक्रामति )

लक्ष्मणः—सुमन्त्र दीर्घमार्गपरिश्रान्ता एते तुरङ्गमाः, तद् विश्रामयैतान् ।

सुमन्त्रः—यदाज्ञापयति देवः (इति रथमारुह्य निष्क्रान्तः)

लक्ष्मणः—( परिक्रम्य आत्मगतम् ) समादिष्टोऽहमार्येण, अथवा स्वामिना—वत्स लक्ष्मण देव्याः किल सीतायाः रावणभवनसंस्थानाच्चारित्रं प्रति समुत्पन्नविमर्शानां पौराणामन्यादृशाः प्रलापाः प्रवर्तन्ते, तन्न शक्नोमि सीतामात्रस्य कृते शरच्चन्द्रनिर्मलस्येक्ष्वाकुकुलस्य कलङ्कमुत्पादयितुम् । सीतया चाहं गर्भिणीभावसुलभेन दोहदेन भागीरथीदर्शनं प्रार्थितः । तस्मात् त्वमनेन गङ्गागमनव्याजेन सुमन्त्राधिष्ठितं रथमारोप्य कस्मिंश्चिद् वनोद्देशे परित्यज्य निवर्तस्व—इति । तदहमपि स्वजनविस्रम्भनिर्विशङ्कां देवीमादाय गृहहरिणीमिव वध्यभूमिं वनमुपनयामि ।

सीता—वत्स, लक्ष्मण अतिशयितगर्भभरोद्वहनपरिश्रान्तौ न प्रभवतो मे चरणौ । तदग्रतो भूत्वा निवेदय कियद्दूरे भगवती भागीरथी वर्तत इति ।

लक्ष्मणः—नन्वासन्नैव भगवती भागीरथी, तदलं विषादेन, संप्राप्ता एव वयम् । पश्य—

आदाय पङ्कजवनान्मकरन्दगन्धान्
कर्षन्नितान्तमधुरान् कलहंसनादान् ।
शीतास्तरंगकणिका विकिरन्नुपैति
गंगानिलस्तव सभाजनकांक्षयेव ॥

सीता—( स्पर्शं नाटयति ) साम्प्रतं जननीकरस्पर्शसुखशीतलस्य भागीरथीतरङ्गमारुतस्य स्पर्शेन परिश्रमस्येव पापस्य परिक्षयो जातः । तथापि दोहदकौतूहलं गङ्गावगाहने मां समुत्साहयति तदस्मात्तटप्रपाताद् यथा परिश्रान्तावतरामि तथादेशय मे मार्गम् ।

लक्ष्मणः—( निर्दिश्य ) अत्यन्तविश्रान्तमनुष्यसंचारतया दुरवतारास्तटप्रदेशाः । तस्मात् प्रपदमास्थाय सम्यक्—

वामेन नीवारलतां करेण जानुं समालम्ब्य च दक्षिणेन ।
पदे पदे मे पदमादधाना शनैःशनैरेतु मुहूर्तमार्या ॥

सीता—( यथोक्तमवतीर्य ) वत्स सुष्ठु परिश्रान्तास्मि, एतस्यां पादपच्छायायां मुहूर्तमुपविश्य विश्रमयिष्यामि ।

लक्ष्मणः—यदभिरुचितं देव्यै ।

( सीता उपविश्य विश्रान्तिं नाटयति )

लक्ष्मणः—अहो असंहार्यपरिच्छदाः सुकृतिनः । तथाहि—

तरङ्गा वीजन्ते सजलकणिकाम् शीतमरुतस्-

तथैते सङ्गीतं दधति कलहंसाः कलगिरः +

सखीवच्छायेयं रमयति परिष्वज्य हृदयं,

वने शून्येऽप्यस्मिन् परिजनवतीवात्रभवती ॥

सीता—यथा भणितं कुमारेण, स्वजनमध्यगताया इवात्राभिरमते मे हृदयम् ।

लक्ष्मणः—( आत्मगतम् ) एषा विश्रान्ता सुखोपविष्टा च देवी, तदयमेवावसरो यथास्थितं व्यवसितुम् । ( प्रकाशम् ) ( सहसा पादयोर्निपत्य ) अयमनवरतप्रवासदुःखभागी निर्लक्षणो लक्ष्मणो विज्ञापयति—स्थिरीक्रियतां हृदयम् ।

सीता—( ससम्भ्रमम् ) अपि कुशलमार्यपुत्रस्य ?

लक्ष्मणः—( वनं निर्दिश्य ) एवं गते कीदृशं कुशलमार्यस्य ।

सीता—आर्यया कैकेय्या पुनरपि समादिष्टो वनवासः ?

लक्ष्मणः—समादिष्टो वनवासः, न पुनरम्बया ।

सीता—केन पुनः समादिष्टः ?

लक्ष्मणः—आर्येण

सीता—कथं समादिष्टः ?

लक्ष्मणः—( वाष्पस्तम्भमभिनीय )

आर्यस्यादेश इत्येव वक्तुमिच्छामि यत्नतः ।

तथापि हृदयं गत्वा ग्रन्थिं बध्नाति भारती ॥

सीता—किं मम समादिष्टो वनवासः ?

लक्ष्मणः—न केवलं तव, आत्मनोऽपि ।

सीता—कथमिव ।

लक्ष्मणः—प्रवासमुक्ते स्वगृहाभिमानात्

सुहृज्जनेनाहितयागवह्नौ ।

आर्यस्य रम्ये भवनेऽपि वास-
स्तव प्रवासे वनवास एव ॥

सीता—वत्स, परिस्फुटं कथय, अद्य कथं मम वनवास आर्यपुत्र-
स्य वनवास इति ।

लक्ष्मणः—किमपरं कथयामि मन्दभाग्यः ।
त्यक्ता किल त्वमार्येण चारित्रगुणशालिना ।
मयापि किल गन्तव्यं त्यक्त्वा त्वामिह कानने ॥

सीता—हा तात ! आर्य कोशलाधिप ! अद्योपरताऽसि ( मोहं
गच्छति )

लक्ष्मणः—( ससम्भ्रमम् ) कष्ट भोः ! कष्टं भोः ! निर्घातपातदारु-
णेनानेन परित्यागवार्ताश्रवणेन नूनमुपरता देवी । ( निर्वर्ण्य )
दिष्ट्या श्वसिति । तत् को नु खल्वस्याः प्रत्यानयनेऽभ्युपायः ।
( विषादं नाटयति ) आश्चर्यमाश्चर्यम्—
भागीरथीशीकरशीतलेन संभाव्यमाना मृदुनानिलेन ।
मद्भाग्यशेषेण च बोध्यमाना प्रत्यागतां राजसुता कथंचित् ॥

सीता—वत्स लक्ष्मण ! किं गतोऽसि ?

लक्ष्मणः—आज्ञापय, तिष्ठाम्येष मन्दभाग्यः ।

सीता—किमुपालभ्यास्मि परित्यक्ता ?

लक्ष्मणः—कीदृशो देव्या उपालम्भः ।

सीता—अहो मे अधन्यत्वम्, किमुपालम्भमात्रेण विना निगृही-
तास्मि । किमस्ति किमपि तेन संदिष्टम् ?

लक्ष्मणः—अस्ति ।

सीता—कथय कथय ।

लक्ष्मणः—तुल्यान्वयेत्यनुगुणेति गुणोन्नतेति
दुःखे सुखे च सुचिरं सहवासिनीति ।
जानामि केवलमहं जनवादभीत्या
सीते त्यजामि भवतीं न तु भावदोषात् ॥

अयमार्यस्य संदेशः ।

सीता—कथं जनवादभयेनेति । किमपि वचनीयं मेऽस्ति ?

लक्ष्मणः—कीदृशमार्याया वचनीयम् ।
ऋषीणां लोकपालानामार्यस्य मम चाग्रतः ।
अग्नौ शुद्धिं गता देवी किन्तु—

सीता—(लज्जां नाटयति) कथय किन्तु—

लक्ष्मणः—लोको निरङ्कुशः ॥

सीता—अग्निशुद्धिसंकीर्तनेन प्रतिबोधितास्मि । रावणभवनोदन्तः पुनरप्युद्बाधते । सीताया अपि नाम एवं संभाव्यत इति सर्वथाऽलं महिलात्वेन । एवं परित्यक्ता । ननु परित्यक्तास्मि ! किन्न खलु युक्तं ममार्यपुत्रपरित्यक्तमात्मानं परित्यक्तुम् ? किन्तु खलु तस्यैव निरनुक्रोशस्य समान एव प्रसवः प्रेक्षितव्य इति वचनीयकण्टकोपहितं जीवितं परिरक्षामि ?

लक्ष्मणः—अनुगृहीतोऽस्मि । ( उत्थाय प्रणमति ) इदमपरमार्येण संदिष्टम् ।

सीता—किन्नु खलु भविष्यति ।

लक्ष्मणः—त्वं देवि चित्तनिहिता गृहदेवता मे
स्वप्नागता शयनमध्यसखी त्वमेव ।
दारान्तराहरणनिःस्पृहमानसस्य
यागे तव प्रतिकृतिर्मम धर्मपत्नी ॥

सीता—एवं सन्दिशतार्यपुत्रेण परित्यागदुःखं मयि निरवशेषम-
पनीतम् । नहि तथान्यशक्ता पत्युः स्त्रीजनस्य दुःखमुत्पादयति
यथान्यासक्तः ।

लक्ष्मणः—कः प्रतिसन्देशः ?

सीता—कस्य ।

लक्ष्मणः—आर्यस्य ।

सीता—एवं गतेऽपि प्रतिसंदेशः । श्वश्रूणां पुनर्मम वचनात् पाद-
वन्दनं कृत्वा विज्ञापय—एवमहं नीरक्षा श्वापदसमाकीर्णे वने
प्रतिवसन्ती च सर्वथा हृदयेनार्याभिरनुग्रहीतव्येति ।

लक्ष्मणः—प्रतिगृहीतेयमाज्ञा । आर्यस्य न किञ्चित् समादिष्टम् ।

सीता—तथा निष्ठुरो नाम सन्दिश्यत इत्यप्रतिहतवचनतैषा
लक्ष्मणस्य, न सीताया धन्यत्वम् । तथा मम वचनात्तं जनं
विज्ञापय—मन्दभागिनीमनुशोचन् वर्णाश्रमपरिपालनमभिन्न-
मात्मानं न बाधस्व । सद्धर्मे स्वशरीरे सावधानो भवेति ।

लक्ष्मणः—किमेतावत्यपि न प्रभवति देवी ?

सीता—एवमपि तं जनं विज्ञापय—न युक्तं तव निरपराधमिमं
जनं सपदि हृदयतो निर्वासयितुं किं पुनर्विषयत इति ।

लक्ष्मणः—सन्देष्टव्यमार्यया सन्दिष्टम्—

आर्या निर्वासिता नाम हृदयात् प्रभविष्णुना ।
कथं गृहाद् गृहं नाम कथं जनपदादपि ॥

सीता—एवमपि मम वचनाद् विज्ञापयितव्यः—सा तपोवनवासिनी
सर्वथा सीमन्तनिहितेनाञ्जलिना विनिवेदयति यदि अहं
निर्गुणा चिरपरिचितेति वा, अनाथेति वा, सीतेति वा स्मरण-
मात्रकेणानुग्रहीतव्येति ।

लक्ष्मणः—इमं संदेशमाकर्ण्य क्षते चारमिवाहितम् ।
दशामसह्यां शोकस्य व्यक्तमार्यो गमिष्यति ॥

सीता—वत्स, लक्ष्मण प्रणन्तव्या त्वया मम वचनात् राघव-
कुलराजधानी भगवत्ययोध्या । शुश्रूषितव्यः प्रतिमागतो
महाराजः । साधयितव्या श्वश्रूणामाज्ञप्तिः । समाश्वासयि-
तव्याः प्रियंवदा मम प्रियसख्यः । स्मर्तव्या सर्वकालं
मन्दभागिनी ।

( इति रोदिति )

लक्ष्मणः—( सोद्वेगम् )
आर्यां स्वहस्तेन वने विमोक्तुं श्रोतुञ्च तस्याः परिदेवितानि ।
सुखेन लङ्कासमरे हतं मामजीवयन्मारुतिरात्तवैरः ॥

( विलोक्य )

एते रुदन्ति हरिणा हरितं विमुच्य
हंसाश्च शोकविधुराः करुणं रुदन्ति ।
नृत्तं त्यजन्ति शिखिनोऽपि विलोक्य देवीं
तिर्यग्गता वरममी न परं मनुष्याः ॥

सीता—वत्स, लक्ष्मण आसन्नास्तमयः सूर्यः । दूरे चेतो मानुष-
सम्पातः । उड्डीनाः पक्षिणः । सञ्चरन्ति श्वापदाः । गच्छ न
युक्तं परिलम्बितुम् ।

लक्ष्मणः—( अञ्जलिं बध्वा ) सर्वपश्चिमोऽयं लक्ष्मणस्य प्रणा-
माञ्जलिः । तत् सावधानं परिगृह्यताम् ।

सीता—नित्यावहिता खल्वहम् ।

लक्ष्मणः—विज्ञापयामि देवीम्—

आर्ये मित्रं बान्धवान् वा स्मरन्त्या
शोकादात्मा मृत्यवे नोपनेयः ।
इक्ष्वाकूणां सन्ततिर्गर्भसंस्था
सेयं देव्या यत्नतो रक्षणीया ॥

सीता—अप्रतिहतवचनः खलु सौमित्रिः ।

लक्ष्मणः—इयमपरा विज्ञापना ।

सीता—का अन्या ।

लक्ष्मणः—ज्येष्ठस्य भ्रातुरादेशादानीय विजने वने ।
परित्यक्तासि देवि त्वं दोषमेकं क्षमस्व मे ॥

सीता—( ससम्भ्रमम् ) ज्येष्ठवचनानुवर्ती त्वमिति परितोषकाले को दोष आशङ्क्यते ।

लक्ष्मणः—( सप्रदक्षिणं प्रणम्य परिक्रामति )

सीता—( रोदिति )

लक्ष्मणः—(दिशोऽवलोक्य) भो भो लोकपालाः शृण्वन्तु भवन्तः—
एषा वधूर्दशरथस्य महारथस्य ।

सीता—अतिश्लाघनीयान्यक्षराणि श्रूयन्ते ।

लक्ष्मणः—रामाह्वयस्य गृहिणी मधुसूदनस्य ।

सीता—कुतो मे तादृशो भागधेयः ।

लक्ष्मणः—निर्वासिता पतिगृहात् ।

सीता—( कर्णौ पिदधाति )

लक्ष्मणः—विजने वनेऽस्मिन् ।
एकाकिनी वसति रक्षत रक्षतैनाम् ॥

सीता—( गर्भं दर्शयति )

लक्ष्मणः—एनामपि भगवतीम् आर्यायाः कृते विज्ञापयामि—

जातश्रमां कमलगन्धकृताधिवासैः
काले त्वमप्यनुगृहाण तरङ्गवातैः ।
देवी यदा च स्रवनाय विगाहते त्वां
भागीरथि ! प्रशमय क्षणमम्बुवेगम् ॥
ये केचिदत्र मुनयो निवसन्त्यरण्ये
विज्ञापयामि शिरसा प्रणिपत्य तेभ्यः ।
स्त्रीत्युज्झितेत्यशरणेति कुलागतेति
देवी सदा भगवतीत्यनुकम्पनीया ॥
एषोऽञ्जलिर्विरचितो वनदेवतानां
विज्ञापनां क्षणमिमामवधारयन्तु ।
सुप्ता प्रमादवशगा विषमस्थिता वा
यत्नादियं भगवतीभिरवेक्षणीया ॥
भो भो हिंस्रा भूमिरेषा भवद्भि-
र्वर्ज्यो देशो न प्रवेश्यः परेषाम् ।
मृग्यो मृग्यो विप्रवासे सखीनां
यूयं सख्यो मा क्षणं मुञ्चतैनाम् ॥
सख्यो नद्यः स्वामिनो लोकपालाः
मातर्गङ्गे भ्रातरः शैलराजाः ।
भूयो भूयो याचते लक्ष्मणोऽयं
यत्नाद् रक्ष्या राजपुत्री गतोऽहम् ॥

(प्रणम्य निष्क्रान्तः)

---

## ३१—समानशीलव्यसनेषु सख्यम्

तपनपवनयोर्यः प्राप्तवान् पुत्रभावं
शतमखकृतबाणो विद्यया जन्मना च ।
स तु दशमुखकीर्तिस्तोमसोमस्य पक्ष-
श्चरम इव तनूमान् प्राप रामं हनूमान् ॥

स एव स्वीकृतभिक्षुकवेषः सविनयमेतौ आबभाषे । भवन्तौ कतरौ कान्ताकारौ कान्तारं कथमिदमवातरतां विचित्रतरजिष्णु-कोदण्डमण्डितावपि दिनस्यास्य सुदिनत्वाद् भवन्तौ न जीमूतौ जटा-वल्कलयुतावपि जङ्गमत्वाद् भवन्तौ न कल्पवृक्षौ ।

युष्मद्वार्त्तासुधास्वादलुब्धयोः श्रोत्रयोः सुखम् ।
स्वयमेव ग्रहीतुं मे जिह्वा प्रह्वा प्रवर्त्तते ॥

कश्चिदस्ति समस्तवानरपतिः सुग्रीव इति तेन भ्रातृभयादृष्य-मूकमुपाश्रितेन युवाभ्यां सह सख्यमिच्छता प्रेषितं हनुमदभिधानं दधानं भिक्षुरूपप्रतिच्छन्नं वानरमिममाञ्जनेयं प्रभञ्जनसंजातं जानीतमिति ।

ततस्तदीयं वचनमाकर्ण्य कर्णयुगलसुधावर्षी देवर्षिप्रतिमो दाशरथिस्तद्दर्शितेन पथा तमुपाश्रित्य विरचितभुवनसौख्यं सख्यं तपनतनयेन साकमग्निसाक्षिकमकरोत् ।

योगं वितन्वति हनूमति राघवस्य
वैवस्वतेन हरिणा समवर्तिना च ।
मेने विधिर्घटयितुं हरिमिन्द्रपुत्रं
वैवस्वतेन हरिणा समवर्तिना च ॥

ततस्तत्क्षणं सम्भूतविस्रम्भाय प्रतिश्रुतबालिवधाय कथितनिजदशाय दाशरथये सुग्रीवो दशग्रीवनीयमानसीतापातितानि कानिचिदाभरणान्यदर्शयत् ।

प्रत्यर्पितानां कपिपुङ्गवेन,
रामः स्वकान्ताधृतभूषणानाम् ।
संस्कारहान्या परिधूसराणां
प्रक्षालनं बाष्पजलैश्चकार ॥

ततः सौमित्रिभणितनिर्बन्धसन्धुक्षितधैर्येण रामेणानुयुक्तो बालिवैरकारणं भानुसूनुरित्थमकथयत्—

पुरा खलु निखिलरिपुकुलतिमिरनिचयमरीचिमालिनं बालिनं मायावी नाम दानवः कश्चन दुन्दुभेर्भ्राता रुद्ध्वा तद्बलचकितधृतिरुरगनगरकुहरमगाहत । तदनुगाहमानेन मानशालिना बालिना बिलमुखपालनाय निहितस्तस्योत्थानवेलां प्रतिपालयन्नहं चिरकालेऽप्यतीते फेनस्त्यानं मांसनिःसृतमसृक्पूरमवेक्ष्य भ्राता मे निहत इति निरचिनवम् । तदनु विपुलोपलपटलपिहितबिलमुखः सबलीमुखबलस्तस्मै दत्त्वा स्वयमुदश्रुरुदकनैवापमवापं शोकान्धः किष्किन्धाम् । अथ विदितवृत्तान्तैरमात्यैरभिषेचिते मयि मायाविनं निहत्य खरतरभुजपरिघविघट्टितबिलवदनपिधानस्तरसा रसातलात् पुरं प्रविष्टोऽतीव रुष्टः प्रभ्रष्टाशयो बहुशः प्रणिपतन्तं प्रतिपादितयाथातथ्यं मां नगरान्निरागसमपि निरकासयत् । तदनु तदनुधावनात् कान्दिशीकस्य मम पर्वतेऽस्मिन्नकुतोभयसञ्चारकारणमाकर्ण्यताम्—

पुरैकदा बालिनमतुलभुजबलमखिलकुलाचलचलनचतुरं चतुर्णवलङ्घनजङ्घालं दुन्दुभिर्नाम वृन्दारकारिर्लुलायकायः परिभूय

समरे समतिष्ठत। निहतस्य तस्य शवं बाहुबलावलेपेन वाली अनिलबलचलितलघुतूललीलया मतङ्गाश्रमक्षितौ क्षिप्रमक्षिपत्।

तत्र बालिकरनुन्ननिष्पतद्-
दुन्दुभिप्रसृतरक्तबिन्दुभिः।
पाटलं तदभवन्मुनेर्वनं
तस्य वक्त्रमपि रोषपाटलम्॥

ततो मतङ्गशापबलादबालिवश्यमृष्यमूकं विमृश्यास्मिन् विस्मृतपुरनिवाससुखे सुचिरं निवसति सति मयि—

अयमसुखयदेवं देव धीमान् हनूमान्
रिपुरिति भवतोऽपि त्रस्तमस्तौजसं माम्।
दवहुतवहधूमस्तोम इत्यम्बुवाहा—
च्चकितमिव मयूरं मारुतो वारिशीतः॥

---

## ३२—अबालपराक्रमो बालः

(प्रविश्य संभ्रान्ता बटवः)।

कुमार कुमार, अश्वोऽश्व इति कोऽपि भूतविशेषो जनपदेष्वनुश्रूयते, सोऽयमधुनास्माभिः स्वयं प्रत्यक्षीकृतः।

लवः—अश्वोऽश्व इति नाम पशुसमाम्नाये सांग्रामिके च पठ्यते। तत्ब्रूत कीदृशः।

बटवः—अये श्रूयताम्।

पश्चात्पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव।

शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रान्
किं व्याख्यानैर्व्रजति स पुनर्दूरमेह्येहि यामः ॥

(इत्यजिने हस्तयोश्चाकर्षन्ति)

लवः—( सकौतुकोपरोधविनयम् । ) आर्याः पश्यत । एभिर्नीतोऽस्मि । (इति त्वरितं परिक्रामति )

अरुन्धतीजनकौ—महत्कौतुकं वत्सस्य ।

कौसल्या—इतोऽन्यतो भूत्वा प्रेक्षामहे तावत्पलायमानं दीर्घायुषम् ।

अरुन्धती—अतिजवेन दूरमतिक्रान्तः स चपलः कथं दृश्यते ।

कञ्चुकी—(प्रविश्य) भगवान्वाल्मीकिराह ज्ञातव्यमेतदवसरे भवद्भिरिति ।

जनकः—अतिगम्भीरमेतत्किमपि । भगवत्यरुन्धति सखि कौशल्ये, आर्य गृष्टे, स्वयमेव गत्वा भगवन्तं प्राचेतसं पश्यामः ।

(इति निष्क्रान्तो वृद्धवर्गः)

(प्रविश्य)

बटवः—पश्यतु कुमारस्तावदाश्चर्यम् ।

लवः—दृष्टमवगतं च । नूनमाश्वमेधिकोऽयमश्वः ।

बटवः—कथं ज्ञायते ।

लवः—ननु मूर्खाः । पठितमेव हि युष्माभिरपि तत्काण्डम् । किं न पश्यथ प्रत्येकं शतसंख्याः कवचिनो दण्डिनो निषङ्गिणश्च रक्षितारः । तत्प्रायमेवान्यदपि दृश्यते । यदि च विप्रत्ययस्तत्पृच्छथ ।

बटवः—भो भोः किं प्रयोजनोऽयमश्वः परिवृतः पर्यटति ।

लवः—( सस्पृहमात्मगतम् ) अश्वमेध इति नाम विश्वविजयिनां क्षत्रियाणामूर्जस्वलः सर्वक्षत्रपरिभावी महानुत्कर्षनिकषः ।

( नेपथ्ये )

योऽयमश्वः पताकेयमथवा वीरघोषणा ।
सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः ॥

लवः—( सगर्वमिव ) अहो संदीपनान्यक्षराणि ।

बटवः—किमुच्यते । प्राज्ञः खलु कुमारः ।

लवः—भो भोः ! तत्किमक्षत्रिया पृथिवी यदेवमुद्घोष्यते ।

( नेपथ्ये )

रे रे महाराजं प्रति कुतः क्षत्रियाः ।

लवः—धिग्जाल्मान् ।

यदि नो सन्ति सन्त्येव केयमद्य विभीषिका ।
किमुक्तैरेभिरधुना तां पताकां हरामि वः ॥

हे वटवः परिवृत्य लोष्ठैरभिघ्नन्तः उपनयतैनमश्वम् । एष रोहितानां मध्येचरो भवतु ।

---

## ३३—आचारसूत्राणि

वयोऽनुरूपं वेषं कुर्यात् । श्रुतस्याभिजनस्य धनस्य देशस्य च । सति विभवे न जीर्णमलवद्वासाः स्यात् । नित्यं शुचिस्सुगन्धस्स्नानशीलः । नान्यधृतं वासो बिभृयात् । न स्रगुपानहौ । न रूढश्मश्रुरकस्मात् । त्रिः पक्षस्य केशश्मश्रुलोमनखान् संहारयेत् साधुवेशः प्रसिद्धकेशः मूर्धश्रोत्रघ्राणपादतैलनित्यः,

छत्री दण्डी सोपानत्कश्च स्यात्। मलायनेष्वभीक्ष्णं पादयोश्च वैमल्यमादध्यात्। द्वौ कालावुपस्पृशेत्।

उष्णं स्निग्धं मात्रावज्जीर्णे वीर्याविरुद्धमिष्टे देशे इष्टसर्वोपकरणं नातिद्रुतं नातिविलम्बितं न जल्पन्न हसंस्तन्मना भुञ्जीत आत्मानमभिसमीक्ष्य सम्यक्। नोत्सङ्गे भक्षयेत्। नासन्द्यां भुञ्जीत।

नानृजुः क्षुयान्नाद्यान्न शयीत। ब्राह्मे मुहूर्ते बुद्ध्येत। न चापररात्रमधीत्य पुनः प्रतिसंविशेत्। न कदाचिद्रात्रौ नग्नः शयीत। स्नायाद्वा। नातिसमयं जह्यात्। न नियमं भिन्द्यात्।

सभ्यः स्यात्। नोच्चैर्हसेत्। न शब्दवन्तं मारुतं मुञ्चेत्। नानावृतमुखो जृम्भां क्षवथुं हास्यं वा प्रवर्तयेत्। न नासिकां कुष्णीयात्। न दन्तान् विघट्टयेत्। नास्थीन्यभिहन्यात्। न भूमिं विलिखेत्। न छिन्द्यात् तृणम्। न लोष्ठमर्दी स्यात्। न विगुणमङ्गैश्चेष्टेत। नाश्लीलं कीर्तयेत्। न गुह्यं विवृणुयात्। अनिमित्ततः खानि न स्पृशेत्।

गुरोः पूर्वोत्थानं चरमं संवेशनम्। शय्यासनस्थानानि विहाय प्रतिश्रवणम्। न चास्य केवलं नाम ब्रूयात्। ब्रह्मचारी स्वनाम संकीर्त्याभिवादयेदहं भो इति। तस्य च व्यत्यस्तकरः पादावुपस्पृशेत्। दक्षिणं दक्षिणेनेतरमितरेण। ( सभासु चैव सर्वासु यज्ञे राजगृहेषु च। नमस्कारं प्रकुर्वीत ब्राह्मणान्नाभिवादयेत्॥ विष्णु० )। नास्यैकासनी भवेत्। ऋते शिलाफलकनौयानेभ्यः। बाले समानवयसि वाध्यापके गुरुवद्वर्तेत। वित्तबन्धुकर्मजातिविद्यावयांसि मान्यानि। श्रुतं तु सर्वेभ्यो गरीयः।

न च गुरूणां त्वमिति ब्रूयात्। न पन्थानमवमूत्रयेत्। न जनवति नान्नकाले न जपहोमाध्ययनबलिमंगलक्रियासु श्लैष्मसिंघाणकं मुञ्चेत्। न चापोऽञ्जलिना पिबेत्। नेष्टकाभिः फलं शातयीत। नाग्निं मुखेनोपधमेत्। न दन्तैर्नखलोमानि छिन्द्यात्। न संहताभ्यां पाणिभ्यां शिर उदरञ्च कण्डूयेत्।

सुप्तं न प्रबोधयेत्। शास्यं शासनार्थं ताडयेत्। महात्मनां परिवादं परिहरेत्। लोकविद्विष्टं धर्ममपि। सत्यं ब्रूयात्। नानृतम्। नाप्रियम्। न कल्को न कुहको भवेत्। न दीर्घसूत्री स्यात्। न सिद्धावुत्सेकं गच्छेत् नासिद्धौ दैन्यम्।

यञ्चात्मवंतो वृद्धाः सम्यग्विनीताः दम्भलोभमोहवियुक्ता वेदविद आचक्षते तत्समाचरेत्।

---

## ३४—रघोर्वयःसन्धिः

दिशः प्रसेदुर्मरुतो ववुः सुखाः प्रदक्षिणार्चिर्हविरग्निराददे।
बभूव सर्वं शुभशंसि तत्क्षणं भवो हि लोकाभ्युदयाय तादृशाम्॥
अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा।
निशीथदीपाः सहसा हतत्विषो बभुवुरालेख्यसमर्पिता इव॥
जनाय शुद्धान्तचराय शंसते कुमारजन्मामृतसंमिताक्षरम्।
अदेयमासीत् त्रयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे॥
निवातपद्मस्तिमितेन चक्षुषा नृपस्य कान्तं पिबतः सुताननम्।
महोदधेः पूर इवेन्दुदर्शनाद्गुरुः प्रहर्षः प्रबभूव नात्मनि॥
स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते।
दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ॥

सुखश्रवा मङ्गलतूर्यनिस्वनाः प्रमोदनृत्यैः सह वारयोषिताम् ।
न केवलं सद्मनि मागधीपतेः पथि व्यजृम्भन्त दिवौकसामपि ॥
न संयतस्तस्य बभूव रक्षितुर्विसर्जयेद्यं सुतजन्महर्षितः ।
ऋणाभिधानात् स्वयमेव केवलं तदा पितॄणां मुमुचे स बन्धनात् ॥
श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां युधि चेति पार्थिवः ।
अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम् ॥
पितुः प्रयत्नात् स समग्रसंपदः शुभैः शरीरावयवैर्दिने दिने ।
पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः ॥
उमावृषाङ्कौ शरजन्मना यथा यथा जयन्तेन शचीपुरन्दरौ ।
तथा नृपः सा च सुतेन मागधी ननन्दतुस्तत्सदृशेन तत्समौ ॥
उवाच धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चांगुलिम् ।
अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः ॥
तमङ्कमारोप्य शरीरयोगजैः सुखैर्निषिञ्चन्तमिवामृतं त्वचि ।
उपान्तसंमीलितलोचनो नृपश्चिरात् सुतस्पर्शरसज्ञतां ययौ ॥
स वृत्तचूलश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः ।
लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् ॥
अथोपनीतं विधिवद् विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम् ।
अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रिया हि वस्तूपहिता प्रसीदति ॥
धियः समग्रैः स गुणैरुदारधीः क्रमाच्चतस्रश्चतुरर्णवोपमाः ।
ततार विद्याः पवनातिपातिभिर्दिशो हरिद्भिर्हरितामिवेश्वरः ॥
त्वचं स मेध्यां परिधाय रौरवीमशिक्षतास्त्रं पितुरेव मंत्रवित् ।
न केवलं तद्गुरुरेकपार्थिवः क्षितावभूदेकधनुर्धरोऽपि सः ॥
महोक्षतां वत्सतरः स्पृशन्निव द्विपेन्द्रभावं कलभः श्रयन्निव ।
रघुः क्रमाद् यौवनभिन्नशैशवः पुपोष गाम्भीर्यमनोहरं वपुः ॥

युवा युगव्यायतबाहुरंसलः कपाटवक्षाः परिणद्धकन्धरः ।
वपुः प्रकर्षादजयद् गुरुं रघुस्तथापि नीचैर्विनयाददृश्यत ।

---

## ३५—त्रिसन्ध्यम्

ततः कोकवधूबन्धुर्बन्धूककुसुमप्रभः ।
उदयाद्रिशिरोरत्नमुद्ययौ तेजसां निधिः ॥

यात्येकतोऽस्तशिखरं पतिरोषधीना—
माविष्कृतोऽरुणपुरस्सर एकतोऽर्कः ।
तेजोद्वयस्य युगपद् व्यसनोदयाभ्यां
लोको नियम्यत इवैष दशान्तरेषु ॥

कुमुदवनमपश्रि श्रीमदम्भोजषण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिलसितानां ही विचित्रो विपाकः ॥

विरलविरलीभूतास्ताराः कलौ सुजना इव
व्यपसरति च ध्वान्तं चित्तात्सतामिव दुर्जनः ।
मन इव मुनेः सर्वत्रापि प्रसन्नमभून्नभो
विगलति निशा क्षिप्रं लक्ष्मीरनुद्यमिनामिव ॥

अयमुदयति मुद्राभञ्जनः पद्मिनीना-
मुदयगिरिवनालीबालमन्दारपुष्पम् ।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्
कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥

---

उष्णार्त्तः शिशिरे निषीदति तरोर्मूलालवाले शिखी
निर्भिद्योपरि कर्णिकारमुकुलान्याशेरते षट्पदाः ।
तप्तं वारि विहाय तीरमलिनीं कारण्डवः सेवते
क्रीडावेश्मनि चैष पञ्जरशुकः क्लान्तो जलं याचते ॥

---

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥
अयमुदयति चन्द्रश्चन्द्रिकाधौतविश्वः
परिणतविमलिम्नि व्योम्नि कर्पूरगौरः ।
ऋजुरजतशलाकास्पर्धिभिर्यस्य पादै-
र्जगदमलमृणालीपञ्जरस्थं विभाति ॥
कैलासायितमद्रिभिर्विटपिभिः श्वेतातपत्रायित
मृत्पङ्केन दधीयितं जलनिधौ दुग्धायितं वारिभिः ।
मुक्ताहारलतायितं प्रततिभिः शङ्खायितं श्रीफलैः
श्वेतद्वीपकुलायितं जनपदैर्जाते शशाङ्कोदये ।

---

## ३६—अकिञ्चनस्य वदान्यता

तमध्वरे विश्वजिति क्षितीशं,
निःशेषविश्राणितकोषजातम् ।
उपात्तविद्यो गुरुदक्षिणार्थी
कौत्सः प्रपेदे वरतन्तुशिष्यः ॥
स मृन्मये वीतहिरण्मयत्वात्
पात्रे निधायार्घ्यमनर्घशीलः ।

श्रुतकाशं यशसा प्रकाशः
प्रत्युज्जगामातिथिमातिथेयः ॥
तमर्चयित्वा विधिवद्विधिज्ञ—
स्तपोघनं मानधनाग्रयायी ।
विशां पतिर्विष्टरभाजमारात्
कृताञ्जलिः कृत्यविदित्युवाच ॥
अप्यग्रणीर्मन्त्रकृतामृषीणां
कुशाग्रबुद्धे कुशली गुरुस्ते ।
यतस्त्वया ज्ञानमशेषमाप्तम्
लोकेन चैतन्यमिवोष्णरश्मेः ॥
कायेन वाचा मनसापि शश्वद्-
यत्संभृतं वासवधैर्यलोपि ।
आपाद्यते न व्ययमन्तरायैः
कच्चिन्महर्षेस्त्रिविधं तपस्तत् ॥
आधारबन्धप्रमुखैः प्रयत्नैः
संवर्द्धितानां सुतनिर्विशेषम् ।
कच्चिन्न वाय्वादिरुपप्लवो वः
श्रमच्छिदामाश्रमपादपानाम् ॥
क्रियानिमित्तेष्वपि वत्सलत्वा-
दभग्नकामा मुनिभिः कुशेषु ।
तदङ्कशय्याच्युतनाभिनाला
कच्चिन्मृगीणामनघा प्रसूतिः ॥
निर्वर्त्यते यैर्नियमाभिषेको—
येभ्यो निवापाञ्जलयः पितॄणाम् ।

तान्युञ्छषष्ठाङ्कितसैकतानि
शिवानि वस्तीर्थजलानि कच्चित् ॥
नीवारपाकादि कडंगरीयै—
रामृश्यते जानपदैर्न कच्चित् ।
कालोपपन्नातिथिकल्प्यभागं
वन्यं शरीरस्थितिसाधनं वः ॥
अपि प्रसन्नेन महर्षिणा त्वं
सम्यग्विनीयानुमतो गृहाय ।
कालो ह्ययं संक्रमितुं द्वितीय
सर्वोपकारक्षममाश्रमं ते ॥
तवार्हतो नाभिगमेन तृप्तं
मनो नियोगक्रिययोत्सुकं मे ।
अप्याज्ञया शासितुरात्मना वा
प्राप्तोऽसि संभावयितुं वनान्माम् ॥
इत्यर्घ्यपात्रानुमितव्ययस्य
रघोरुदारामपि गां निशम्य ।
स्वार्थोपपत्तिं प्रति दुर्बलाशा—
स्तमित्यवोचद्वरतन्तुशिष्यः ॥
सर्वत्र नो वार्तमवेहि राजन्
नाथे कुतस्त्वय्यशुभं प्रजानाम् ।
सूर्य्ये तपत्यावरणाय दृष्टेः
कल्पेत लोकस्य कथं तमिस्रा ॥
भक्तिः प्रतीक्ष्येषु कुलोचिता ते
पूर्वान् महाभाग तयातिशेषे ।

व्यतीतकालस्त्वहमभ्युपेत—
स्त्वामर्थिभावादिति मे विषादः ॥
शरीरमात्रेण नरेन्द्र तिष्ठ-
न्नाभासि तीर्थप्रतिपादितर्द्धिः ।
आरण्यकोपात्तफलप्रसूतिः
स्तम्बेन नीवार इवावशिष्टः ॥
स्थाने भवानेकनराधिपः सन्-
नकिञ्चनत्वं मखजं व्यनक्ति ।
पर्य्यायपीतस्य सुरैर्हिमांशोः
कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥
तदन्यतस्तावदनन्यकार्यो—
गुर्वर्थमाहर्तुमहं यतिष्ये ।
स्वस्त्यस्तु ते निर्गलिताम्बुगर्भं
शरद्घनं नार्दति चातकोऽपि ॥
एतावदुक्त्वा प्रतियातुकामं
शिष्यं महर्षेर्नृपतिर्निषिध्य ।
किं वस्तु विद्वन् गुरवे प्रदेयं
त्वया कियद्वेति तमन्वयुङ्क्त ॥
ततो यथावद्विहिताध्वराय
तस्मै स्मयावेशविवर्जिताय ।
वर्णाश्रमाणां गुरवे स वर्णी
विचक्षणः प्रस्तुतमाचचक्षे ॥
समाप्तविद्येन मया महर्षि-
र्विज्ञापितोऽभूद्गुरुदक्षिणायै ।

स मे चिरायास्खलितोपचारां
तां भक्तिमेवागणयत् पुरस्तात् ॥
निर्बन्धसंजातरुषार्थकार्श्य-
मचिन्तयित्वा गुरुणाहमुक्तः ।
वित्तस्य विद्यापरिसंख्यया मे
कोटीश्चतस्रो दश चाहरेति ॥
सोहं सपर्याविधिभाजनेन
मत्वा भवन्तं प्रभुशब्दशेषम् ।
अभ्युत्सहे संप्रति नोपरोद्धु-
मल्पेतरत्वाच्छ्रुतनिष्क्रयस्य ॥
इत्थं द्विजेन द्विजराजकान्ति-
रावेदितो वेदविदां वरेण ।
एनोनिवृत्तेन्द्रियवृत्तिरेनं
जगाद भूयो जगदेकनाथः ॥
गुर्वर्थमर्थी श्रुतपारदृश्वा
रघोः सकाशादनवाप्य कामम् ।
गतो वदान्यान्तरमित्ययं मे
मा भूत्परीवादनवावतारः ॥
स त्वं प्रशस्ते महिते मदीये
वसंश्चतुर्थोऽग्निरिवाग्न्यगारे ।
द्वित्राण्यहान्यर्हसि सोढुमर्हन्
यावद्यते साधयितुं त्वदर्थम् ॥
तथेति तस्यावितथं प्रतीतः
प्रत्यग्रहीत्सङ्गरमग्रजन्मा ।

गामात्तसारां रघुरप्यवेक्ष्य
निष्क्रष्टुमर्थं चकमे कुबेरात् ॥
वसिष्ठमन्त्रोक्षणजात्प्रभावा—
दुदन्वदाकाशमहीधरेषु ।
मरुत्सखस्येव बलाहकस्य
गतिर्विजघ्ने न हि तद्रथस्य ॥
अथाधिशिश्ये प्रयतः प्रदोषे
रथं रघुः कल्पितशस्त्रगर्भम् ।
सामन्तसंभावनयैव धीरः
कैलासनाथं तरसा जिगीषुः ॥
प्रातः प्रयाणाभिमुखाय तस्मै
सविस्मयाः कोषगृहे नियुक्ताः ।
हिरण्मयीं कोषगृहस्य मध्ये
वृष्टिं शशंसुः पतितां नभस्तः ॥
तं भूपतिर्भासुरहेमराशिं
लब्धं कुबेरादभियास्यमानात् ।
दिदेश कौत्साय समस्तमेव
पादं सुमेरोरिव वज्रभिन्नम् ॥
जनस्य साकेतनिवासिनस्तौ
द्वावप्यभूतामभिनन्द्यसत्त्वौ ।
गुरुप्रदेयाधिकनिःस्पृहोऽर्थी
नृपोऽर्थिकामादधिकप्रदश्च ॥

—

## ३७—रक्षितुः परीक्षा

सा दुष्प्रधर्षा मनसापि हिंस्रैरित्यद्रिशोभाप्रहितेक्षणेन ।
अलक्षिताभ्युत्पतो नृपेण प्रसह्य सिंहः किल तां चकर्ष ॥
तदीयमाक्रन्दितमार्तसाधोर्गुहानिबद्धप्रतिशब्ददीर्घम् ।
रश्मिष्विवादाय नगेन्द्रसक्तां निवर्तयामास नृपस्य दृष्टिम् ॥
स पाटलायां गवि तस्थिवांसं धनुर्धरः केसरिणं ददर्श ।
अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम् ॥
ततो मृगेन्द्रस्य मृगेन्द्रगामी वधाय वध्यस्य शरं शरण्यः ।
जाताभिषङ्गो नृपतिर्निषङ्गादुद्धर्तुमैच्छत्प्रसभोद्धृतारिः ॥
वामेतरस्तस्य करः प्रहर्तुर्नखप्रभाभूषितकङ्कपत्रे ।
सक्ताङ्गुलिः सायकपुङ्ख एव चित्रार्पितारम्भ इवावतस्थे ॥
बाहुप्रतिष्टम्भविवृद्धमन्युरभ्यर्णमागस्कृतमस्पृशद्भिः ।
राजा स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रौषधिरुद्धवीर्यः ॥
तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम् ।
विस्माययन्विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः ॥
अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।
न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य ॥
कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् ।
अवेहि मां किंकरमष्टमूर्तेः कुम्भोदरं नाम निकुम्भमित्रम् ॥
अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन ।
यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः ॥
कण्डूयमानेन कटं कदाचिद्वन्यद्विपेनोन्मथिता त्वगस्य ।
अथैनमद्रेस्तनया शुशोच सेनान्यमालीढमिवासुरास्त्रैः ॥

तदाप्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ ।
व्यापारितः शूलभृता विधाय सिंहत्वमङ्कागतसत्त्ववृत्ति ॥
तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण ।
उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव ॥
स त्वं निवर्तस्व विहाय लज्जां गुरोर्भवान्दर्शितशिष्यभक्तिः ।
शस्त्रेण रक्ष्यं यदशक्यरक्षं न तद्यशः शस्त्रभृतां क्षिणोति ॥
इति प्रगल्भं पुरुषाधिराजो मृगाधिराजस्य वचो निशम्य ।
प्रत्याहतास्त्रो गिरिशप्रभावादात्मन्यवज्ञां शिथिलीचकार ॥
प्रत्यब्रवीच्चैनमिषुप्रयोगे तत्पूर्वभङ्गे वितथप्रयत्नः ।
जडीकृतस्त्र्यम्बकवीक्षणेन वज्रं मुमुक्षन्निव वज्रपाणिः ॥
संरुद्धचेष्टस्य मृगेन्द्र कामं हास्यं वचस्तद्यदहं विवक्षुः ।
अन्तर्गतं प्राणभृतां हि वेद सर्वं भवान्भावमतोऽभिधास्ये ॥
मान्यः स मे स्थावरजङ्गमानां सर्गस्थितिप्रत्यवहारहेतुः ।
गुरोरपीदं धनमाहिताग्नेर्नश्यत्पुरस्तादनुपेक्षणीयम् ॥
स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं प्रसीद ।
दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः ॥
अथान्धकारं गिरिगह्वराणां दंष्ट्रामयूखैः शकलानि कुर्वन् ।
भूयः स भूतेश्वरपार्श्ववर्त्ती किंचिद्विहस्यार्थपतिं बभाषे ॥
एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च ।
अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम् ॥
भूतानुकम्पा तव चेदियं गौरेका भवेत्स्वस्तिमती त्वदन्ते ।
जीवन्पुनः शश्वदुपप्लवेभ्यः प्रजाः प्रजानाथ पितेव पासि ॥
अथैकधेनोरपराधचण्डाद्गुरोः कृशानुप्रतिमाद् बिभेषि ।
शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः ॥

तद्रक्ष कल्याणपरम्पराणां भोक्तारमूर्जस्वलमात्मदेहम् ।
महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः ॥
एतावदुक्त्वा विरते मृगेन्द्रे प्रतिस्वनेनास्य गुहागतेन ।
शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव ॥
निशम्य देवानुचरस्य वाचं मनुष्यदेवः पुनरप्युवाच ।
धेन्वा तदध्यासितकातराक्ष्या निरीक्ष्यमाणः सुतरां दयालुः ॥
क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः ।
राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥
कथं नु शक्योऽनुनयो महर्षेर्विश्राणनाच्चान्यपयस्विनीनाम् ।
इमामनूनां सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वयास्याम् ॥
सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवत्तः ।
न पारणा स्याद्विहता तवैवं भवेदलुप्तश्च मुनेः क्रियार्थः ॥
भवानपीदं परवानवैति महान्हि यत्नस्तव देवदारौ ।
स्थातुं नियोक्तुर्नहि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन ॥
किमप्यहिंस्यस्तव चेन्मतोहं यशःशरीरे भव मे दयालुः ।
एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु ॥
सम्बन्धमाभाषणपूर्वमाहुर्वृत्तः स नौ संगतयोर्वनान्ते ।
तद्भूतनाथानुग नार्हसि त्वं सम्बन्धिनो मे प्रणयं विहन्तुम् ॥
तथेति गामुक्तवते दिलीपः सद्यः प्रतिष्टम्भविमुक्तबाहुः ।
स न्यस्तशस्त्रो हरये स्वदेहमुपानयत्पिण्डमिवामिषस्य ॥
तस्मिन्क्षणे पालयितुः प्रजानामुत्पश्यतः सिंहनिपातमुग्रम् ।
अवाङ्मुखस्योपरि पुष्पवृष्टिः पपात विद्याधरहस्तमुक्ता ॥
उत्तिष्ठ वत्सेत्यमृतायमानं वचो निशम्योत्थितमुत्थितः सन् ।
ददर्श राजा जननीमिव स्वां गामग्रतः प्रस्रविणीं न सिंहम् ॥

तं विस्मितं धेनुरुवाच साधो मायां मयोद्भाव्य परीक्षितोऽसि ।
ऋषिप्रभावान्मयि नान्तकोऽपि प्रभुः प्रहर्तुं किमुतान्यहिंस्राः ॥
भक्त्या गुरौ मय्यनुकम्पया च प्रीतास्मि ते पुत्र वरं वृणीष्व ।
न केवलानां पयसां प्रसूतिमवेहि मां कामदुघां प्रसन्नाम् ॥
ततः समानीय स मानितार्थी हस्तौ स्वहस्तार्जितवीरशब्दः ।
वंशस्य कर्तारमनन्तकीर्तिं सुदक्षिणायां तनयं ययाचे ॥
संतानकामाय तथेति कामं राज्ञे प्रतिश्रुत्य पयस्विनी सा ।
दुग्ध्वा पयः पत्रपुटे मदीयं पुत्रोपभुङ्क्ष्वेति तमादिदेश ॥
वत्सस्य होमार्थविधेश्च शेषमृषेरनुज्ञामधिगम्य मातः ।
ऊधस्यमिच्छामि तवोपभोक्तुं षष्ठांशमुर्व्या इव रक्षितायाः ॥

---

## ३८—सत्यास्तितिक्षा मुनेः शरण्यता च

अथ व्यवस्थापितवाक्कथंचित्सौमित्रिरन्तर्गतबाष्पकंठः ।
औत्पातिको मेघ इवाश्मवर्षं महीपतेः शासनमुज्जगार ॥
ततोऽभिषङ्गानिलविप्रविद्धा प्रभ्रश्यमानाभरणप्रसूना ।
स्वमूर्तिलाभप्रकृतिं धरित्रीं लतेव सीता सहसा जगाम ॥
इक्ष्वाकुवंशप्रभवः कथं त्वां त्यजेदकस्मात्पतिरार्यवृत्तः ।
इति क्षितिः संशयितेव तस्यै ददौ प्रवेशं जननी न तावत् ॥
सा लुप्तसंज्ञा न विवेद दुःखं प्रत्यागतासुः समतप्यतान्तः ।
तस्याः सुमित्रात्मजयत्नलब्धो मोहादभूत्कष्टतरः प्रबोधः ॥
न चावदद्भर्तुरवर्णमार्या निराकरिष्णोर्वृजिनादृतेऽपि ।
आत्मानमेव स्थिरदुःखभाजं पुनः पुनर्दुष्कृतिनं निनिन्द ॥

आश्वास्य रामावरजः सतीं तामाख्यातवाल्मीकिनिकेतमार्गः ।
निघ्नस्य मे भर्तृनिदेशरौक्ष्यं देवि क्षमस्वेति बभूव नम्रः ॥
सीता तमुत्थाप्य जगाद वाक्यं प्रीतास्मि ते सौम्य चिराय जीव ।
बिडौजसा विष्णुरिवाग्रजेन भ्रात्रा यदित्थं परवानसि त्वम् ॥
श्वश्रूजनं सर्वमनुक्रमेण विज्ञापय प्रापितमत्प्रणामः ।
प्रजानिषेकं मयि वर्तमानं सूनोरनुध्यायत चेतसेति ॥
वाच्यस्त्वया मद्वचनात्स राजा वह्नौ विशुद्धामपि यत्समक्षम् ।
मां लोकवादश्रवणादहासीः श्रुतस्य किं तत्सदृशं कुलस्य ॥
कल्याणबुद्धेरथवा तवायं न कामचारो मयि शंकनीयः ।
ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः ॥
उपस्थितां पूर्वमपास्य लक्ष्मीं वनं मया सार्धमसि प्रपन्नः ।
तदास्पदं प्राप्य तयातिरोषात्सोढास्मि न त्वद्भवने वसन्ती ॥
निशाचरोपप्लुतभर्तृकाणां तपस्विनीनां भवतः प्रसादात् ।
भूत्वा शरण्या शरणार्थमन्यां कथं प्रपत्स्ये त्वयि दीप्यमाने ॥
किं वा तवात्यन्तवियोगमोघे कुर्यामुपेक्षां हतजीवितेऽस्मिन् ।
स्याद्रक्षणीयं यदि मे न तेजस्त्वदीयमन्तर्गतमन्तरायः ॥
साहं तपः सूर्यनिविष्टदृष्टिरूर्ध्वं प्रसूतेश्चरितुं यतिष्ये ।
भूयो यथा मे जननान्तरेऽपि त्वमेव भर्ता न च विप्रयोगः ॥
नृपस्य वर्णाश्रमपालनं यत्स एव धर्मो मनुना प्रणीतः ।
निर्वासिताप्येवमतस्त्वयाहं तपस्विसामान्यमवेक्षणीया ॥
तथेति तस्याः प्रतिगृह्य वाचं रामानुजे दृष्टिपथं व्यतीते ।
सा मुक्तकण्ठं व्यसनातिभाराच्चक्रन्द विग्ना कुररीव भूयः ॥
नृत्यं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान्विजहुर्हरिण्यः ।
तस्याः प्रपन्ने समदुःखभावमत्यन्तमासीद्रुदितं वनेऽपि ॥

तामभ्यगच्छद्रुदितानुसारी कविः कुशेध्माहरणाय यातः ।
निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः ॥
तमश्रु नेत्रावरणं प्रमृज्य सीता विलापाद्विरता ववन्दे ।
तस्यै मुनिर्दोहदलिंगदर्शी दाश्वान्सुपुत्राशिषमित्युवाच ॥
जाने विसृष्टां प्रणिधानतस्त्वां मिथ्यापवादक्षुभितेन भर्त्रा ।
तन्मा व्यथिष्ठा विषयान्तरस्थं प्राप्तासि वैदेहि पितुर्निकेतम् ॥
उत्खातलोकत्रयकण्टकेऽपि सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि ।
त्वां प्रत्यकस्मात्कलुषप्रवृत्तावस्त्येव मन्युर्भरताग्रजे मे ॥
तवोरुकीर्तिः श्वशुरः सखा मे सतां भवोच्छेदकरः पिता ते ।
धुरि स्थिता त्वं पतिदेवतानां किं तन्न येनासि ममानुकम्प्या ॥
तपस्विसंसर्गविनीतसत्त्वे तपोवने वीतभया वसास्मिन् ।
इतो भविष्यत्यनघप्रसूतेरपत्यसंस्कारमयो विधिस्ते ॥
अशून्यतीरां मुनिसंनिवेशैस्तमोपहन्त्रीं तमसां विगाह्य ।
तत्सैकतोत्सङ्गबलिक्रियाभिः संपत्स्यते ते मनसः प्रसादः ॥
पुष्पं फलं चार्तवमाहरन्त्यो बीजं च बालेयमकृष्टरोहि ।
विनोदयिष्यन्ति नवाभिषङ्गामुदारवाचो मुनिकन्यकास्त्वाम् ॥
पयोघटैराश्रमबालवृक्षान्संवर्धयन्ती स्वबलानुरूपैः ।
असंशयं प्राक्तनयोपपत्तेः स्तनंधयप्रीतिमवाप्स्यसि त्वम् ॥
अनुग्रहप्रत्यभिनन्दिनीं तां वाल्मीकिरादाय दयार्द्रचेताः ।
सायं मृगाध्यासितवेदिपार्श्वं स्वमाश्रमं शान्तमृगं निनाय ॥

---

## ३९—कविकमर्णः कानिचन मर्माणि

कीर्णानि घण्टापथ एव हन्त शब्दार्थरत्नानि गिरां सवित्र्या ।
अत्यादरादामृशतां कवीनां दृग्गोचरं कस्यचिदेव यान्ति ॥
यानेव शब्दान्वयमालपामो यानेव चार्थान्वयमुल्लिखामः ।
तैरेव विन्यासविशेषभव्यैः संमोहयन्ते कवयो जगन्ति ॥
तिर्यङ्मनुष्यव्यतिरेकहेतुर्देव्या गिरामेव कटाक्षपातः ।
प्रज्ञाविशेषास्तु परे जनानां प्रायो दिशन्ति श्वश्रृगालसाम्यम् ॥
बाल्यं विदुः प्राकृतभाषितानि श्रुतिस्मृती वृद्धदशां वदन्ति ।
साहित्यमेकन्तु गिरां सवित्र्यास्तारुण्यमुद्गाढमुशन्त्यभिज्ञाः ॥
क्वार्थाः क्व शब्दाः क्व रसाः क्व भावाः क्व व्यङ्गभेदाः क्व च वाक्यरीतिः
कियत्सु दृष्टिः कविना न देया किमस्ति राज्ञामियतीह चिन्ता ॥
तान्येव शास्त्राणि त एव शब्दास्त एव चार्था गुरवस्त एव ।
इन्यान्विशेषः कवितापथेऽस्मिन् देव्या गिरां दृक्परिवर्तभेदः ॥
साहित्यविद्यां पदमेकमेव सर्वानवद्यामपि हन्ति दुस्स्थम् ।
दन्तावलिं मौक्तिकदामरम्यां दंष्ट्रेव वक्त्राद्बहिरुल्लसन्ती ॥
कालाद्बहोः कान्यपि दुष्पदानि लब्धानि मन्दः परितो विकीर्य ।
छिद्राणि लोष्ठैरथ पांसुभिश्च सम्पूरयन् विस्मयते विलज्जः ॥
स्थूलाभिरभ्युल्लिखितानि धीभिः स्थूलानि मन्ये कुकवेर्वचांसि ।
कथं न चेत्कर्णपुटं प्रवेष्टुमेतानि यत्नादपि नोत्सहन्ते ॥
वाचं हतो यद्यपि ते तथापि न मूकता दुष्कवितेव दोषः ।
आद्या यदेकस्य विषादहेतुः प्राणोपरोधाय परा बहूनाम् ॥
वाचं विपञ्चीमिव वादयन्ति कर्णामृतेन ध्वनिना कवीन्द्राः ।
मूर्खाः स्वमेधामुसलप्रहारैर्विनाशयन्त्येव विचेष्टमानाः ॥

